तु कथमिति कः परिहारः। यदि वासनापि प्रतिभासतेर्थवदर्थ एव सेति नाममात्र-कमे[6]व भिद्यते। तत्र वासनामात्रग्राहके (c 35a) व्याप्रियमाणा ग्राहकभेदमेव जनयेत्। न तु ग्राह्यस्य। तथा ह्यनुभवादुत्पन्ना वासना स्मृतिमात्रमेव जनयन्ती दृश्यते। अत्र परिहारः।

पूर्व्वविज्ञानमेवात्र वासनेत्युदित पुरा ।
तत्तदाकारविज्ञान जनयेद् भेदक न कि ॥
यथा हि गृह्यलाबन्ध स्त्यनिता गतिमादवत् ।
अभावेप्यात्मनो दृष्टस्तद्रूपगतिकारणम् ॥
वासनाभेदतो भेदो[7] ग्राह्याकारोपि दृश्यते ।
अभावेपि पदार्थाना कामशोकभयादिषु ॥

अथ तत्रापि देशकालान्यथात्मक बाह्यमेवालम्बन सर्व्वविज्ञानानां साल-म्बनत्वात्। यद्यपि तदा तत्र न प्राप्यते तदैव तत्रैव माभूदन्यदान्यत्र तु नास्तीति किमत्र प्रमाणं। तथा हि घटो यत्र यदा नोपलभ्यते तदा तत्र नास्ति न तु सर्व्वत्र। अत्रोच्यते।

इहोपलभ्यमानस्य कथ देशादिनान्यता ।
नीलादित्वेन दृ[8]श्यस्य किमन्याकारतास्ति व ।

यद्यन्यदेशोप्यन्यदेशतयोपलभ्यते नीलाकारोपि तथेति समानमेतत्। अन्या-कारे प्रमाणाभावादन्यथा नेति परिहारेन्यदेशोतिसमानः परिहारः। आकारे नास्ति बाधन देशे तु बाधा तेन स एव (c 35b) देशयोगो नास्ति न त्वाकार.। तत्र तर्हि निरालम्बन ततः सर्व्वं सालम्बनमित्यसिद्ध।

ननु सालम्बनत्व तत्रापि यत.।
देशावेद्याति[9]रेकेण न योग कश्चिदीक्ष्यते ।
तयोरालम्बनत्वे च ज्ञानानालम्बता कथ ॥

देशतदावेद्याकार एव तत्र प्रतिभाति तयोश्च स(ा)ल(म्बन)त्वे किमना-लम्बनं रूपं। नहि योगोन्यथेऽपरस्तयोरिति सालम्बनमेव सकलम्विज्ञानमिति।

यदि योपि (हि) सालम्ब कथ प्राप्तिस्तथैव न ।
अप्राप्तावपि सालम्बमिति स्यादसमञ्जस ॥

यदि नास्ति प्राप्तिस्तथापि सालम्बनम्विपरीतख्यातिरपि तर्हि नास्त्येवे[10]ति. अभ्युपगमविरोध.। अपि च। यथा विपरीतख्यातिस्तथा सर्व्वमेव भवतु किमन्यथा कल्पनयेत्यादर्शितमेवैतदिति नोच्यते पुनः। बाधकप्रत्ययाभावान्नैवमिति चेत्। बाधकप्रत्ययाभावोपि विपरीतख्यातिरेवेति न सत्याबाधकता। यत्र च कालान्यता तत्र वासनाया एव व्यापारः प्रतीयते नार्थस्य, पूर्व्वानुभवादेव तदाकारता नावि-

**द्यमानार्थाकारप्रतिभासनम् ।[11] अथ क्षणिकम्विज्ञानं कथं वास्यवासकभावस्तत्र ।**

अनुत्पन्न न वास्येत अतीतोपि न वासक ॥

**सहितयोरपि परस्परमसम्बन्धान्न** (c 36a) **वास्यवासकभावः। तदसत् । कार्यकारणभावविशेष एव वास्यवासकभाव इति प्रतिपादनात्। क्षणिकानामेव च स विद्यते न नित्यानामिति । क्षणिकत्त्वादिति विपरीतसाधनमेतत्। ततश्च ।**

स्मृतौ ग्राहकभेदोन्यो न ग्राह्याकारवर्ज्जित[12] ।
अर्थस्तत्र न सत्त्वेन तत्र सन्निहित पुर ॥
क्षणिकेषु च चित्तेषु विनाशे च निरन्वये ।
वास्यवासकयोरर्थो न नित्यत्त्वे तु कल्प्यते ॥
पूर्व्वक्षणोद्भवन्नेव विशिष्टो जायते क्षण ।
तत कालान्तरे तस्मादन्यत्कार्य विजायते ।
वास्यवासकभावोय नापर कार्यकारणात् ॥
विनश्यता हि वास्येत पूर्व्वेणोत्तरमुद्भवत् ।
अवस्थिता न वास्यन्ते भावाभावैरवस्थितै ।
नित्य[13]स्य ह्यविकारत्त्वात्कार्यकारणताक्रम ।
अवस्थितो न पूर्व्वस्माद्वासनासङ्गमर्हति ॥
पूर्व्ववद्वासना तस्य न स्यादेवाविशेषत ।
भङगुरे पूर्व्वसादृश्याद्भिन्नत्त्वाच्चास्ति वासना ॥
तच्चानुरूप्यमस्त्येव क्षणिकत्त्वेपि चेतसा ।
पूर्व्वज्ञानात्तदोत्पन्नादुत्तरस्योदयो न कि ॥
नेष्यते क्षण एवासौ कार्यमुत्पादयेत्पर ।
तेनोत्पद्य विनष्टत्वेप्यस्त्यारम्भ क्षण स्थिते ॥
निरन्वयविनाशित्त्वेप्यानुरू[14] प्यस्य का क्षति ।
न तदीयोस्ति कश्चिच्चेद्धर्म उत्तरबुद्धिषु ।
न समानपरामर्शप्रत्ययादेकरूपता ।
यदि (c 36b) स्यादानुरूप्याच्च गोधियो वासना यदा ।
हस्तिबुद्धिर्भवेत्तत्र वैलक्षण्यान्न वासना ।
अन्यथा व्यवधानेपि वासना पूर्व्वदार्ढ्यत ॥
दृढमावर्जक ज्ञान व्यवधानेपि कार्यकृत् ।
गजज्ञानाद् गजज्ञान पूर्व्वबीजात्प्रवर्त्तते ।
मध्ये विलक्षण ज्ञान जायते वासनान्तरात् ।
न चै[15]कज्ञाननाशेन विनष्टा सर्व्ववासना. ।

कुसुमस्य विनाशे हि राग उत्पद्यता कुत ।
बीजाङ्कुरादि नालादेस्तद्धि (द्व) लक्षणत कथ ।
तेपि तज्जनिता एव क्रमात्कार्यस्य कारका ।
महिष्यादिधियामेतत्कस्मादेव न विद्यते ।
तन्न सर्व्वाभ्य एताभ्य सर्व्वाकार समुत्थित ।
ज्ञानमेकक्षणेनैव विनाश गन्तुमर्हति ।
तदाश्रयविनाशेपि शक्ते स्यादाश्रयोपर ।
न च क्षणिक[16] ता हानि शक्तेरव्यतिरेकत । 5b
वासनाना प्रवाहस्तु नैव ज्ञानप्रवाहवत् ॥
इष्यते वासनाविद्भि शक्तिरूपा हि वासना ।
वासनातश्च तज्ज्ञान भवेत्तेभ्यश्च वासना ।
कुर्याता तुल्यमेवैतेऽन्योन्यन्तु (हि) कदाचन ।
विलक्षणोपि हेतुर्यदास्ति शक्त्यन्तरात्मक ।
ततो विलक्षणाद्धेतो फलमन्यद्विलक्षण ।
तस्मात्सम्वृतिसत्येर्थाव्यतिरेकेण कल्पिता ।
न वस्तुत्वे न तस्या कि कार्यमन्यदसम्भ[1]वि ॥
यस्य त्ववस्थितो ज्ञाता ज्ञानाभ्यासश्च सम्मत ।
न तस्य वासनाधारो नाप्यसौ वासना मता ॥
कुसुमे बीजपूरादे यल्लाक्षाद्युपसिध्यति ।
(c 37a) तद्रूपस्यैव सक्रान्ति फले तस्येति वासना ।
युक्त्योपपन्ना हि सती प्रकल्प्य यद्वासनामर्थनिराक्रियेय ।
तथापि बाह्याभिनिवेश एष जगद्ग्रहग्रस्तमिद समस्त ॥०॥
तस्माद्विभक्त आकार सकलो वासनाबलात् ।
बहिरर्थत्वरहितस्ततो[2] ऽनालम्बना मति ॥

**अत एवं सर्व्वे प्रत्यया अनालम्बना. प्रत्ययत्वात्स्वप्नप्रत्ययवदिति प्रमाणस्य परिशुद्धिः। तथा हीदमेवानालम्बनत्त्व यदात्माकारवेदनत्वं।**

**ननु सकलप्रत्ययपक्षीकरणे न दृष्टान्त इति कथमनुमानं। ना(न। अ)र्थपरिज्ञानात्** (।)

प्रमाणफलमेतद्धि प्रमाणापेक्षसाधने ।
दृष्टान्तस्य ह्यत सिद्धे सर्व्वं इत्यादियुक्तिमत् ।

**विवादास्पदीभूतजाग्रत्प्रत्यया एव पक्षीकृता । स्वप्नप्रत्यया[3]नान्तु भावनान्वयव्यतिरेकानुविधानात्सिद्धमेव निरालम्बनत्वं दृष्टान्तीक्रियते। कथं**

व्याप्तिसिद्धिः। यज्जातीयो यतः सिद्धइति न्यायात्। अन्यथा सकलकार्यकारण-भावाभाव एव भवेत्प्रमाणाभावात्। अन्वयव्यतिरेकानुविधानमेव हेतुफलयोस्त-त्वमाचक्षते तद्भे[? वि]द॰।

आदराभ्याससंसर्गि जाग्रद्दृष्ट हि दृश्यते।
स्वप्ने ततो पर ज्ञान तथैवेति प्रतीय[4]ता ॥

ननु न प्रत्ययत्वादनालम्बनत्व स्वप्नप्रत्ययानाम्, पि तु बाधकसद्भावात् (c 37b)। तथा हि।

स्वप्नदृष्ट पुनर्जाग्रद्दर्शनेन न दृश्यते ।
तेनान्यदा तदैवान्यैस्तदनालम्बन तत ।
बाधकप्रत्ययस्तस्यालम्बनश्चे(ञ्चे)ति वारयन् (।)
अनालम्बनताज्ञान करोत्यत्र सुनिश्चित ॥

न चैवं स्वप्नज्ञानवद्बाधको जाग्रत्प्रत्यये। तत्कथं तद्दृष्टान्तः।

नैतदस्ति। बाधकप्रत्ययो हि कथन्तस्य विषयापहारक्षम.। नहि ज्ञानस्या[5]र्था-पनयनं व्यापारोऽङ्कुरादीनामिव। कस्तर्हि। ज्ञापनव्यापार एव। तथा च नास्य विषयोस्तीति परेण ज्ञापयितव्य। अभावञ्चानुपलब्धिरेव ज्ञापयति। एकः प्रति-षधहेतुरिति वचनात्। विरोधस्याप्यनुपलब्ध्यैव साधनात्। ततस्तत्प्रमेयशून्य-तावबोध एव बाधकेन करणीयः। तदभावश्चान्यभाव एवेति तदन्यालम्बनतैव बाधकत्व। तच्च जाग्रत्प्रत्ययेपि सकलं स[6]म्भवि।

ननु जाग्रत्प्रत्ययेनैव भवति नैतदेवमिति, तत्कथं स बाधितः।
ननु नैतदेवमेतदेवमिति फलमसत्येद नि(?) तरयो तत॰ कथं फलतो व्यवस्था न सम्वेदनात्। फलेन हि व्यवस्था प्रमाणाभावात्सम्वृतिसदेव। सम्वेदनमन्तरेण कथं फलमिति चेत्। असम्वेदने सम्वेदनात्। ततः फलमिवार्थसम्वेदनमपि स्वसम्वेदन-मात्रमेव। ततस्तत्रैवार्थसम्वेदनमिति व्यवस्था। तथा हि।

अर्थ[7] सम्वेदने ज्ञाते तदनन्तरतो भवत् ।
(c 38a) फलन्तस्य भवेदेव गमकन्नान्यथा तु तत् ।

तस्मादिदमेव तस्य बाधकं यदन्यरूपग्राहकत्वं तच्च सर्व्वप्रत्ययापेक्षय प्रत्ययान्तराणां।

ननु जाग्रत्प्रत्ययार्थः सम्वादी तत्कथन्तस्यान्येनाग्रहण। स्वप्नप्रत्ययानामपि तदन्यस्वप्नप्रत्ययग्रहणादविसम्वादनमेव, तत्कथं बाध्यता। जाग्रत्प्रत्ययेन बाध्य तामिति चेत्। जाग्रत्प्रत्ययोपि तेनेति समानमेत[8]त्। निद्रोपहते मनसि तस्य भाव इति न बाधकत्वं। यथोपहते चक्षुषि न केशादिदर्शनं तद्विपर्ययस्य बाधकमिति तदसत्।

सि(मि)द्धेनोपहत चेत केनेद सप्रतीयता ।
न तावत्तदवस्थायामिदमेव प्रतीयते ।
**स्वयं प्रत्येति व्यथितो वा।**
**ननु स्वप्नेपि विद्यते सर्व्वमेतत् । तथा हि (।)**
स्वयन्तमात्मान प्रत्येति प्रबुद्ध पुनरेति चेत् ।
स्वप्नेपि तत्केन कृतो विभागो भवतोदित ।

**स्वप्नेपि प्रबोधादि[9]व्यवहारो दृश्यते। ततोऽयमपि प्रबोधादिव्यवहारो ऽलक्षणत्वेनेक्षणात् कथं सप्रत्ययकृत(:) ॥ अथ संप्रत्ययसम्वेदनादेवं स्वप्नेप्येव-मिति समानमेतत्। अथ स्वप्नेपि स्वप्ने एष इति कदाचित्सप्रत्ययस्ततो नैवं। सत्यमेतदिति किं न संप्रत्ययोस्ति। तत सत्यता (c 38b)भवतु। अतएवा-नवस्थितः स्वप्न इति चेत्। अयमप्यनवस्थित एवैश्वर्यादीनामनवस्थानादेव। सहेतु-कमिहानव स्थान[10] अहेतुक स्वप्न इति चेत्। तथा हि। झटित्येव स्वप्नवृष्टं नश्यति ॥ वासनादार्ढ्यमेतन्नत्वर्थ एव साधयितुं शक्य। तथा हि।**

प्रियादिदृष्टिरत्रापि झटित्येव विनश्यति ।
तत्स्वप्ने पि भवत्येव दिन सततदर्शन ॥

**ननु स्वप्नास्वप्नप्रत्यययोर्व्विवेकसाधनं ज्ञानं प्रमाणमप्रमाणम्वेति द्वयी कल्पना। यदि प्रमाण तदा सालम्बनं तदिति तेनानैकान्त.। अथ न प्रमाणन्तदा न पक्षदृष्टान्तप्रसिद्धिरि[11]ति कथमनुमानावतारः। कथ निरालम्बनत्वप्रसिद्धिः।**

**तदसत्। प्रमाणमेव तदिति न दोष.। न च सालम्बनं सकलं प्रमाणमनुमानस्य सालम्बनत्वाभावात्। अनालम्बनत्वेपीह व्यवहाराविसम्वादापेक्षया प्रमाणत्वात्। भेदश्च यस्या[? द्य]पि तयो. सिद्ध स्वप्नेतरविज्ञानयोस्तथापि न तत्साधक प्रमाणं सालम्बनमिति न सर्व्वसालम्बनत्वप्रसङ्ग ।**

लौकिकप्रतिपत्त्यैव ततो भेदे प्र[21]साधिते ॥
साध्यदृष्टान्तचिन्तेय प्रतिभाससमाश्रयात् ॥

**लोके तावदिय (द) स्वप्नविज्ञानमिद जाग्रत इति विभाग. प्रतीयते।* ततस्त-दाश्रयेण साध्यसाधनव्यवहार। ततः पश्चाद्यदि (c 39a) परामृशतो न किञ्चिदत्र विभागकरणमुपलक्ष्यत इति साधयत्यभेदं तथा सति क. परस्य दोषः। यदि च दोष एवं स्यात् वेदप्रामाण्यसाधनेपि दोषो भवेत्। तथा हि।**

**वेदो धर्मी कथन्तस्य लौकिकाद्वचनाद्विवेक[13] इति पर्यनुयुक्तेन किम्वक्तव्यं।**

---

* तत्स्वप्नदर्शना—इति बहि पक्ति पाठ ।

यद्यप्रमाणं लौकिकवचनसदृशमिति कथन्तस्य विवेकेन धर्मित्वं। अथ प्रमाणत्वं प्रसाध्य विवेक कथयेत् तथा सति किं साधनोपन्यासस्य फलं। तत एव तच्चोद्यं कथं परिहर्त्तव्य। नत्वन्यत एवम्विरचनानुपूर्व्वीविशेषाद्वेदस्य प्रबन्धभेदसिद्धिः। नान्येषामपि परस्परस्य तथा भेदसिद्धे.। अथास्ति तावदेष प्रबन्ध. किमय[14]म्वेद तत् नेति विचार्यमाणो यदि प्रमाणं भविष्यति वेद एवान्यथा नानेन प्रयोजनमिति परित्यक्ष्यामः। एव तर्हि समानमिदमिति परित्यक्ष्याम.। एवन्तर्हि समानमिद-मत्रापि प्रत्ययस्तावदीक्ष्यते।

स्वप्नप्रसिद्धिरस्मात्कि भिन्ना नो वेति कल्पने।
पा [?वा] धा भविष्यति पर तथा द्रक्ष्याम इत्यपि ॥

यदि पश्चाद्विचार्यमाण आप्तज्ञानमन्यद्वा परस्पर परमार्थतो भिन्नमभिन्नम्वेति भवेत्तथा[15] ग्रहीष्याम॰। तत्र यदि परामृष्यमाणेन भेदे प्रमाणं किमप्यस्तीत्यभेदं प्रतिपत्स्यामहे। तत क इवात्र विरोध.। पूर्व्वं भेदग्राहकमप्रमाणमिति चेत्। भवतु को दोष.। (c 39b)पक्षादिप्रविभागो न भवेदिति चेत्। मा भूदिदानी 6a
किं नो विघटित। इदमेव यदप्रमाणत्त्वमभेदसाधनस्य। एवं तर्हि।

यत्साधारणधर्मित्वप्रतिपत्तिस्तथा सति।
प्रमाणन्न भ[16]वेदन्यदप्येव द्वारक पर ॥

वेदलक्षणप्रमाणाप्रमाणसाधारणधर्मिप्रति (पत्ति) रप्रमाणमेव स्यात्पश्चात्प्रमाण-त्वसाधनेननिवर्त्तनात्। ततो धर्मिसाधनस्याप्रमाणत्त्वात्तद्द्वारेण प्रामाण्यसाधन-मप्यप्रमाण भवेदिति न वेदप्रामाण्यप्रसिद्धिः। ततः सकल एव साध्यसाधनव्यवहारो विशीर्येत। अथ धर्मिण॰ साधारणस्य ग्रहणेपि न तद्ग्राहकमप्रमाण प्रामाण्यस्या[1]धिकस्य तत्रैव साधनात्। यदि तत्प्रमेयोन्माननं परेण स्यात् स्यादप्रामाण्य।

तदप्यसत्। यतः।

प्रमाणत्व हि तस्यैव स्वरूप धर्मिणो यदा।
तस्य तत्परिहारेण ग्रहणेपि कथ प्रमा ॥

प्रमाणस्वरूप हि वेद वचनं तस्य तद्विपर्ययग्रहणे तद्विपर्ययप्रमेयोन्मूलने परेण कृते कथमप्रमाणता न भवेत्। नहि स्वरूपेणैव कस्यचिदाधिक्य। अगृहीते तदाधिक्य[2]व्यवहार इति चेत्। अग्रहणे कथ प्रमाणता (।) कस्यचिद्रूपस्य ग्रहणादिति चेत्। न। भेदाभावात्। व्यतिरिक्तधर्माभ्युपगमान्नैवञ्चेत्। न। अनवस्थाप्रसङ्गात्।

व्यतिरिक्तो यदा धर्मस् (।)
तेन योग पुनस्तेनेत्यनन्तो धर्मविप्लव ॥

तद्युक्तत्त्व (c 40a)तयोरेव स्वरूप यदि सम्मत ।
प्रमाणत्व तथा प्राप्तमस्माक का विरोधिता ॥
भेदेनापि गृहीतस्य[3] समारोपस्य भावत ।
परामर्शादभेदस्य प्रतिपत्ति किमप्रमा ॥

**अथापि स्याद् भवतोऽभेद प्रतियतः कथ विवेकेन पक्षीकरणादिविभागेन साधनप्रवर्त्तन।**

**तदसत् । परप्रत्ययापेक्षयेदमनुवादमात्रक स्वयमपि पूर्व्वाभ्यासेन साधन-प्रयोग इति न किञ्चिदवद्यं।**

**समाप्य (ए) वमासीदिति परः प्रतिपाद्यते ।**

स्वप्नादिबाधधीवच्चेत् सकल प्रत्ययो[4] न कि ।
सालम्वन प्रसाध्येत प्रत्ययत्वात्परैरपि ॥

**यथा निरालम्बनाः सर्व्वप्रत्यया प्रत्ययत्त्वात्स्वप्नप्रत्ययवदिति तथा साल-म्बनाः सर्व्वप्रत्यया. स्वप्नबाधकप्रत्ययवदेव। अत्रोच्यते।**

प्रत्ययत्वविशेषेण स्वप्नप्रत्ययत पर ।
प्रत्ययोन्यो निरालम्ब इति कि प्रतिसाधन ॥

**यथा स्वप्नप्रत्ययत्त्वाविशेषाद्बाधकप्रमाणपरिनिश्चितनिरालम्बनत्वप्रतिबन्धा-दनालम्बनत्वसा[5]धनं तथा यदि सालम्बनत्वमपि ततो विरुद्धाव्यभिचारीति नैकस्यापि प्रसिद्धिरिति तदेव निरालम्बनत्व ॥ न च सालम्बनत्वे साध्ये प्रतिबन्ध· । अनुपलम्भात्त(द्)द्वयोरपि निरालम्बनत्वं। तथा हि।**

यथास्वरूपरिवन्मात्रादपरस्याप्रवेदन (c 40b)।
स्वप्नादिप्रत्यये जाग्रत्प्रत्ययेपि तथेष्यते ॥

**नहि जाग्रत्प्रतिभाससम्विदितमपि परेण वेद्यते । प्रत्ययान्तरस्यैव तथा वेदनादित्यु[6]क्तमेव तत्। तत्राप्यालम्बनमस्त्येवेति चेत्। तस्मादर्थक्रिया न भवति। यदि नामार्थक्रियाकारि न भवति प्रतीयमानं त्वस्त्येव। न ह्येकस्याभावेऽपरं न भवति। नहि धूमाभावादग्निर्न भवति। सर्व्वदाऽभावात्किशुकराशिवन्न भवत्ये वेति चेत्। एवन्तर्हि तदर्थक्रियाकारि न भवति किशुकराशिवत्। स्वेनरूपेणास्तु। किशुकराशि· स्वेन रूपेणार्थक्रियाकारी भ[7]वतु न स्वप्नोपलब्ध. । नहि स्वप्नभुक्तं पुष्टिकृत्। अथ रूपमेव तत्तथाविधं तेन नेति चेत्। न। स्वरूपसम्वेदनाद्विज्ञानमेव तदिति सूक्त। अथ स्वरूपत्वे को विरोध । वासनाबलभावित स्वप्रतीतत्त्वञ्च। अन्य एव तादृशो भविष्यतीति चेत्। नामकरणमात्रकमेतत्। भवतोपि किन्नेति चेत्। ना(न। अ)नन्तरकारणाधीनस्य प्रतिपादनात्। तेन ज्ञानमेव तत्। तथा[8]च।**

तस्याश्चार्थान्तरे वेद्ये दुर्घटौ वेद्यवेदकौ ॥

नहि तदर्थान्तरं तस्या एव भवति रूपं। ततोऽप्रवेशे न वेदनं। प्रवेशे नार्थान्तरं। ननु यदि बुद्धिस्वरूपमेव तत्तस्य स्वसम्विदितेन नीलादिना भवितव्यं। कथं परेणापि वेदनं(।) न। भ्रान्तिरेषा तैमिरिकद्वयद्विचन्द्रदर्शनवत्। तत्राप्यन्यत्र वेति चेत्। तथा हि (––)

अभ्रान्त प्रत्ययो यद्वदर्थाना वेदको मत ।
(c 41a) साधा[9]रणाना भ्रान्तोपि तथार्थस्यैव वेदक ॥

यथा साधारणत्त्वेन प्रतीयमानो भ्रान्ताभिमतप्रत्ययार्थस्तथेतरोपि। तद-युक्तं।

साधारणत्वमर्थस्य न प्रत्यक्षतयेक्ष्यते ।
प्रत्यक्षासम्भवादत्र नानुमान न वेदन ॥

न तावत्प्रत्यक्षेण परवेदनसाधारणता प्रतीयते। अन्यथा लिङ्गमन्तरेणैव सकलपरप्रतीतिवेदनप्रसङ्गः। अथ परेणापि प्रतीयमान तादृशमेव[10] तत्। ततः सैव तस्य साधारणतेति चेत्। यथा मयैतत्प्रतीयते तथा परेणापरेणापि योग्यदेशस्थितेन प्रतीयत इति हि लोकप्रतीतिः। न। तैमिरिककेशादिषु स्वप्नदृष्टेषु चैवं प्रतीतेरभावात्। तत्रापि भवत्येवेति चेत्। इदमेव रूपं स्वप्नावस्थायामपि ततस्तत्समानत्वादसावपि बाह्य एव। न। भावनादावात्मप्रतिभास एव तादृशो न तु यस्तत्रास्तीति लोकस्य प्रतीतिः[11] एव एतदवस्थानीति समान। परमार्थतस्तु स्वरूपप्रतिभासमात्रकमुभयत्रापीति न सालम्बनता।

ननु स्वप्ने व्याकुलत्त्वमयत्ननिर्व्वर्त्यं सकलं तत् कथं समानता प्रत्ययानां। तदसत्।

नीलादिप्रतिभासेभ्य कान्या व्याकुलतेक्ष्यते ।
साप्यभ्यासबलायाता तत कथमिय स्थिति ॥

नीलपीता(c 41b)दिप्रतिभास एव केवल. कुतोऽपरा तत्र व्याकुलताऽय-त्नोपनतिश्च॥ स्वप्ने प्रयत्नमन्तरेण भावो वृक्षादिस्था[12]ने झटित्येव तद्रागादैरिति चेत्। ननु प्रयत्नमन्तरेण भाव इति केन परिगृहीतं, कार्यभाविना प्रत्ययेन कार्य-मेव कारणभाविना तु कारण। इदमतो भवतीति क्रमः। इदमन्तरेणेदमित्यपि क्रम इत्यध्यवसाय। न प्रत्यक्षमत्र नानुमानं। आकुलमेतदित्यपि न केनचिद्वेद्यते। भाव-नाविशेषाच्च निराकुलतादिभावः स्वप्नेपि। तथा जाग्रदवस्थायामपि। अरिष्टा[13] दावाकुलतादर्शनं। अरिष्टतो दोषादेव तदिति चेत्। न। अरिष्टानरिष्टयोर्व्वि-शेषाभावात्। तत्राप्यपरेण विवेककारिणा भवितव्यं। तत्राप्यपरेणेति नैवं भूतोस्ति यतो विवेकः। अयमेव विवेक इति चेत्। न। स्वरूपनिष्ठि(ष्ठ)तामात्रत्वादस्य।

नहि स्वरूपनिष्ठस्य परसम्वेदनं । स्वरूपमात्रवेदनं त्वाकुलानाकुलसमानं । दीर्घ कालानुबन्धि व्यभिचाररहितमनाकु[14]लमिति चेत् । न । प्रत्यक्षेण दीर्घकालानुबन्धाग्रहणात् । तत. परो विकल्प एवावशिष्यते । तेन च नार्थप्रतिपत्ति. । ततोपि न व्यवस्था तस्यापि स्वरूपे प्रत्यक्षत्वात् । वस्त्वनुभवेन जनितो विकल्प. संवादीति (C 42a) चेत् । न । प्रतिबन्धाग्रहणात् । यदा वस्त्वनुभवो न तदा विकल्प., स यदा न तदानुभव इति कुतोऽत्र सत्यार्थग्रहण। विकल्पेनेति चेत् । अयमपि न प्रमाणम् । तस्यापि प्रतिबन्धसापेक्षत्त्वाद[15]परो विकल्प इत्यनवस्था । एवन्तर्हि वासनयापि कथ सम्बन्धग्रहणं । न । परमार्थतस्तयापीति पक्ष एवायमिति प्रतिपादित । 6

कार्यकारणभावाख्या वासनाभ्युपगम्यते (।)
बाह्यार्थवादिभिर्बाह्य न तु विज्ञानवादिभि ॥

वासनाजन्यतामन्तरेणापि विज्ञानमात्रकमेतदिति प्रतिपादितमेवेति न दोष. । ननु वासना भाविता न जाग्रद्विज्ञाने प्रतीयते । स्वप्नावस्थाया न स्वप्नप्रति(भा)सनमिति समानमेतत् । उत्थितस्य भवति । जाग्रदवस्था[1]या तु न तथेति चेत् । तदपि किञ्चित् । तथाहि ।

उक्तमेतत्प्रबोधो हि स्वप्नेपि प्रतिवेदित ।
तत प्रबोधावस्था या न स्वप्नाद्भिन्नलक्षणा ॥

प्रबुद्धोहमिति स्वप्नेपि भवत्येव । तत· कथ प्रबोधप्रतिभासतो व्यवस्था । अन्येन प्रबोधेन सापि स्वप्नत्वमापादितेति चेत् । इय(न्)तु न केनचिदपीति । अतएव पदार्थव्यवस्था यद्यपि न तथा तथापि तत्समानत्वान्न प्रत्ययस्थानं । अनुमानकालभाविनो हि धूमस्य नाग्निपूर्वकत्त्वसिद्धेरनुमान[2]कत्वमपि तु तल्लणक्षत्त्वेन । एवमस्या अपि जाग्रदवस्थाया (C 42b) स्तल्लक्षणत्त्वादेव तद्रूपता ॥

ननु न तत्र भावनाव्यापार उपलभ्यते जाग्रदवस्थाया कथ स्वप्नकल्पना ॥ तदाह ।

भावनाव्यवधानो(ने)पि भवत्येवावभासन ।
नं [ पूर्व] दृष्ट यथा वृद्धावस्थाया उ(मु)पलभ्यते ॥
जन्मान्तरादिदृष्टस्य मरणस्वापसम्भवे ।
जन्मान्तरोदय स्वप्न इति कि न प्रतीयते ॥
यथा रजनीस्वाप. तथा मरणरजन्यामपि ।
दिने दिने दर्शनमत्र चित्र ।[3]
स्वापप्रबोधात् न तथा किमेतत् ।
पूर्व्वस्य यद्दर्शनमेष हेतु ।
पदार्थदृष्टिरिति साम्यमेव ॥

पूर्व्वदिनदृष्ट यथा रजनीस्वप्नदर्शनस्य हेतुस्तथा पूर्व्वपूर्व्वदिनदृष्टमपररजनी-व्यवहितदिनस्वप्नदर्शनमेवेति महतीयं स्वप्नपरंपरा ॥ अपूर्व्वस्यापि दर्शनमिति चेत्, स्वप्नाभिमतेप्येवमेवेति सर्व्वं समानं।

गमनागमन स्वप्ने यथान्यान्योपलम्भकृत् ।
गमनागमन जाग्रत्स्वप्नेपि न किमिष्यते ॥

व्यवहाराभावादिति[4]चेत् अनेनैवानुमानेन विदुषां व्यवहार इति किन्न पर्याप्तं। यथा कार्यकारणव्यवहार आनुमानिक· तथायमपीति समानं। क्षणिकत्त्वे च न व्यवहार इति कि तेन न भवितव्यं। तदपि नेति चेत्। एतत्प्रतिपादयिष्यामः।

ननु निद्रोपघातात्स्वप्नदर्शनमलत्या (ग),त्वमिति युक्तं। ननु परिस्फुरन्नेवासौ कथं स्वप्न । प्रारम्भे तु (c. 43a) स्वप्नत्व नोपपद्यते। तदेव तस्य प्रतिभासस्य कारणञ्चेत्। न । भावनाविशेषात्प्रतिभास[5]विशेषदृष्टे.। समानोपस्वापप्रारम्भे कश्चित्कथञ्चित् स्वप्नदर्शी भवति ॥ तदभावेऽभावादिति चेत्। भवतु निमित्तमात्रत्व तथापि न तस्य प्रतिभासविशेषकारणत्त्वं। अयमपि स्वापानन्तरमेव प्रतिभासः ततः समानता स्वप्नेन। प्रबोधे( ो)भवतीति चेत्। न। प्रतिभास-व्यतिरेकेण प्रबोधाभावात्। प्रबुद्ध इति प्रत्ययात् प्रबोध इति चेत्। न। स्वप्नेपि स प्रत्यय इत्युक्तं। तस्मात्स्वप्नेतरयोर्विशेषः। ततो यो विशेषद[6]र्शनात् सालम्बननिरा-लम्बनत्वभेदमाह तस्य तद्विशिष्टत्त्वमसिद्धमिति दूषणं। नत्विदानी सालम्बनत्त्व-सिद्धिः प्राप्ता जाग्रत्प्रत्ययाविशेषादिति विपर्ययसिद्धि.। न। विपरीतादिख्यातेर-भावप्रसङ्गात् जाग्रत्प्रत्ययवदेव तथा चाभ्युपगमबाधः। किञ्च।

बाधकप्रत्ययो व्यक्त प्रत्ययत्त्वादिहेतुना ।
विधातु नान्यथा शक्यो नानुमा व्यक्तबाधिका ॥

बाधकप्रत्ययो ह्यनुपलब्धिलक्षणो विपर्ययोपलब्धिरूपः प्रत्यक्षरूपो नानु-मानेन प्रत्य[7]यत्वादिना बाधितु शक्यः। यदि धूमादग्न्यनुमाने पश्चाद्विपर्यये प्रत्यक्षवृत्तिः किमनुमानं प्रमाणं ॥

ननु प्रत्यक्षवृत्तावपि यदि (c 43b) द्विचन्द्रविषयेनुमान बाधकं किन्तत्प्रत्यक्षमिति समानो न्याय.। न। तत्रापि प्रत्यक्षस्यैव बाधकत्वं। पूर्व्वमेकस्य दर्शनात्। अन्यथानुमानमेव न स्यात्।

ननु प्रत्यक्षमनुमानपूर्व्वकं। यदि तु स्यात्। अनुमानमेव तत्रापि बाधकमिति भवेदनुमानबाधायां प्रत्यक्षमप्रमाणम्। तथा च प[8]रस्पर व्याघातान्न किञ्चिद् भवेत्। ततः प्रत्यक्षमूलमनुमानं। न त्वनुमानमूलं प्रत्यक्षं।

नन्वनुमानमूलमेव प्रत्यक्षमपि व्यवस्थित। तथा

नानुमान विना व्यक्त प्रथम सप्रवर्तक ।
अनुमानेन सम्बन्धग्रहणेस्मात्प्रवर्तनात् ॥

अनुमानेन हि सम्बन्धग्रहणेऽर्थक्रियया प्रत्यक्षस्य प्रवर्त्तकत्व ततोऽनुमानात्प्रत्यक्ष प्रमाण प्रत्यक्षादनुमानमिति समानं परस्परबाधनं। यद्येवमितरेतराश्रयणदोष एव स्यान्न तु प्रामा[9]ण्यमेकस्यापि। उक्तमेतत्स्वरूपस्य स्वतो गति। प्रामाण्यव्यवहारेण व्यतिरिक्ते प्रवृत्तिविषयेथात्मनि। तच्चानादिव्यवहारानु-(मान) परम्परया। तच्च सम्वादात्प्रमाणं सम्वादश्च भाविनि। भाविनि चे(त्) सम्वेदनमेव। ततः कथमर्थविषय प्रामाण्य ॥ अनुमानमपि स्वरूपविषये प्रत्यक्षमन्तरेणैव चेत्। न। तत्र तस्य (c. 44a) प्रत्यक्षतैवेति। ततोनुमानेन न प्रत्यक्षव्यतिरिक्ते बाध्यते। तस्यानुमानविषयत्वात्। परोक्षत्वा[10]त्तस्य। कथं परोक्षे प्रत्यक्ष प्रमाणमिति चेत्। प्रवर्त्तकत्वेन। ग्रहणेन। ग्रहणम् चेदप्रवर्त्तकमेव भवेत्। तथा हि।

यद्यसावेव पूर्वस्मिन् प्रत्यक्षे प्रतिभासिन ।
प्रवर्त्तेत किमर्थं स प्राप्त एव स्वरूपत ॥
अर्थक्रियार्थिनो वृत्तिर्न सा तर्हि प्रकाशिता ॥
प्रकाशमानताया हि पुन स्यादप्रवर्तनम् ॥
प्रकाशितार्थक्रियापि प्राप्य(ा)र्थ सप्रवर्तते ।
प्राप्तेरप्रतिभासत्वाद्वृत्तिरप्रतिभासिते ॥

तत्र चानुमाने च बा[11]ध्यते यदि सुतरामस्मत्समीहितसिद्धिः। तथा हि। व्यतिरिक्तेऽन्येऽनुमानेन प्रवर्त्यते प्रत्यक्ष। स च परोक्षत्वादनुमानस्य विषय इति तत्रैवानुमानेन बाधा प्रत्यक्षस्य। तत्र चानुमानबाधायामनुमानमेवानुमानेन बाधितं भवेत्। तच्चान्धपरम्परायातमनुमानं। तस्यानुमानेन बाधने प्रत्यक्षेण वा न कदाचित्क्षति। प्रत्यक्षतत्समुत्थोपि नानुमानयोस्तेनानुमानेन बाधा न प्रत्यक्षेणे[12]ति न्याय एष.।

ननु प्रत्यक्षमपि द्विचन्द्रविषयमेकचन्द्रावभासिना तदुत्तरकालभाविनान्येन वा बाध्यत एव। तस्या प्रत्यक्षत्वादिति चेत्। कस्माद्बाध्यमानत्वात्। परस्परपरिहारेणावस्थितयो कथं (c 44b) बाध्यबाधकभाव। एवमेतदिति चेत्। द्वयोरपि बाध्यबाधकभाव इति। न। प्रापकत्वादेकस्य बाधकत्वमेव। तथा ह्येकत्राभिप्रेतप्रापकत्वं नापरस्य। एवन्तर्हि तदेव पारम्पर्येणानुमानस्य बाध्य[13]त्वमायात। ततो निरालम्बनाः सर्व्व एव प्रत्यया. स्वप्नप्रत्ययवदिति कोर्थः स्वरूपालम्बनाः। तत्र च प्रत्यक्षन्तत्समुत्थापितं चानुमानमनुपलब्धिरूपं। तच्च नानुमानेनान्येन वा बाधितुं शक्यम्। व्यतिरिक्तालम्बनसाधनं तु न प्रत्यक्षं नापि तदुत्थापित-

मनुमानमन्धपरस्परायातत्वात्। तत्र चानुमान प्रत्यक्षं वा भवति बाधकमित्येकान्त एष॰॥ ततः सर्व्वे सालम्बना जाग्रत्प्रत्ययवदिति[14] न प्रतिप्रमाणममूलत्वात्। स्वप्नादीना सालम्बनत्वबाधिका बुद्धिरनालम्बना। तथा सति तद्दृष्टान्तेन कथ सालम्बनत्वसिद्धिः॥

ननु च निरालम्बनत्वं प्रत्ययान्तरगत तदन या बुद्ध्यासाध्यते। तच्च व्यति रिक्त। ततोन्योपि प्रत्ययो व्यतिरिक्तसाध्यविषय एव प्रत्ययत्वादिति कथ– मप्रतिप्रमाणम्। यदि नाम प्रत्यक्षपूर्व्वकत्वादस्याव्यतिरिक्तालम्बनत्व। तद्विपर्ययबुद्धेस्तु विपर्ययग्रस्ताया किमायातम्[15] येन सापि तथेष्यते। न चासौ 7a व्यतिरेकं साधयति, व्यवहारमात्रप्रसाधनात्। अपरं (c 45a) व्यतिरिक्तेतरालम्बनं सम्वादयति। स च सम्वादस्तदनुभवाभिनिवेशी तत्काल एव। ततो नेदानीन्त- दत्र प्रतिभाति मयि। अहन्तु स्वाकारपर्यवसितैवेति तदात्मानमनालम्बनमेव प्रति- पादयति ततो नानया सालम्बनया परापि सालम्बना साध्यते॥

ननु यदि तद्रूपं न विषयीकरोति कथमनया त[1]त्साधितम्॥ तत्र सम्वादा- दित्युक्त। सम्वादाद्विषयीकृतमिति ज्ञायते। अत एवाह॥

अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते।
विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा॥
तथाकृतव्यवस्थेय केशादिज्ञानभेदवत्।
यदा तदा न सचोद्यग्राह्यग्राहकलक्षणा॥

अवेद्य एव वस्तुनि वेदकाकारा केशादौ प्राप्ये, न हि तत्र केशादौ प्राप्ये बुद्धि- र्वेदिका तस्यासत्वात्। भ्रान्तैस्तु प्राप्य वेदिके[2]ति प्रतीयते॥ अतश्च प्रतीयते यत्प्रवर्त्तन्ते। तत्रेदानी प्रवृत्ताना यत्र प्राप्तिर्नास्ति तत्रानालम्बनत्वं स्फुटमेव। तेनापरमनालम्बनं साध्यते। समानरूपोपलक्षणाद्विलक्षणस्यानुपलक्षणात्॥ सालम्बनत्वन्तु न किञ्चिदुपलक्षित ततः कथं तत्समानत्वात्सर्व्वसालम्बनत्व- प्रसिद्धि.। नहि प्राप्य रूपप्रतिभासि तदुपलक्षितं प्रवृत्तेरेवान्यथा तस्य प्रतिभास- नादप्रवर्त्तनं स्यादित्युक्त[3]। प्रतिभासितेपि पुनः प्रतिभासनार्थं प्रवर्त्तेत (c. 45b) इति चेत्। पुनः प्रतिभासमानत्वन्तर्हि न प्रतिभासित। तस्यापि प्रतिभासमानत्वेन प्रवर्त्तेतेत्यनवस्था। पुन. प्रतिभासनञ्च किमर्थं। अर्थार्थ ग्रहणार्थम्वेति चेत्। तदर्थं तर्हि प्रवर्त्तते। तच्चाप्रतिभासितमेव। तस्मादप्रतिभासमान एव सर्व्वत्र विषय- त्त्वमित्यनालम्बन सकलं सम्वेदनमिति कथन्ततो विपर्ययसाधनं। कथन्तहर्य- विषयीकृते[4] प्रवर्त्तते॥

तदसत्।

विषयीकृतेपि हि(?) कथ प्रवर्त्तनमितीरित ।
कार्यकारणभावोयमेवमेव व्यवस्थित ।

**स्वसम्वेदनप्रतिपत्ते प्रतिपत्त्यनन्तरम्भवति स्वहेतुसामर्थ्यादहेतुतो वा । यथा दृष्टं तथाभ्युपगम्यतामत एवोक्तं (––) निर्व्यापारा: सर्व्वधर्मा इति ॥ अथवा व्यतिरिक्तस्य पूर्व्वमप्रतिपत्ते· प्राप्यस्य पश्चाच्च भेदप्रमाणाभावात्कथ व्यतिरिक्तप्रतीति· । एतेनार्थक्रिययापि सह[5]कार्यकारणभाव प्रसक्त· । पूर्व्वापरयोर्भेदाप्रतीते· समानकालस्य चाजन्यत्वात् स्वरूपमेवार्थक्रिया सा च स्वप्नेप्यस्तीति समानं । ततो बुद्धिरवेद्यवेदकाकारैव । विभक्तलक्षणौ ग्राह्यग्राहकाकारौ विप्लव एव तत । तत· स्वरूपमात्रसम्वेदनादपरो विकल्प एव केवलमुदेति पूर्व्वानुबोधात् । ततस्तथा व्यवस्था न परमार्थतस्तत्र तथात्वं । तथा हि केशज्ञाने सति पूर्व्वानुस्मरणादे[6]वंभूतप्रतिभासानन्तरं प्राप्तिरासीत् । ततो विकल्पो (c. 46a) ग्राह्यग्राहकोल्लेखेनोत्पत्तिमान् । सोपि स्वरूपे ग्राह्यग्राहकरूपरहित एवापरेण तथा व्यवस्थाप्यते । न तस्यापि स्वतो व्यवस्था ।**

सम्वेदनेन बाह्यत्त्वमतोर्थस्य न सिध्यति ।
सम्वेदनाद्वहिर्भावे स एव न तु सिध्यति ॥
यदि सम्वेद्यते नील कथ बाह्य तदुच्यते ।
न चेत्सम्वेद्यते नील कथम्बाह्य तदुच्यते ॥
अन्येन वेदने तेन कथम्बाह्यन्तदुच्यते ।
अन्येन वेदने तेन तेनेत्येषानव[7]स्थिति ।
अन्येन वेदनञ्चैतत्कुतोऽवसितमात्मना ।
तत्कार्यदर्शनान्नैतत्कार्यत्वस्याप्रसिद्धित ॥

**नहि कार्यकारणभावः प्रसिध्यतीति निवेदितमेतत् । अनुमानस्य सामान्यविषयत्वस्य वर्णनात् ।**

स एव दृश्यतेन्येनेत्येतदेव न सिध्यति ।
यथा च रोमहर्षादिकार्यदृष्टेस्तदेकता ॥
तथा सुखादेरेकत्व तत एव प्रसिध्यति ॥
अन्यदेव सुखन्तस्य ग्राह्यमप्यन्यदस्तु तत् ।
देशभेदात्सुखादीनामन्यत्त्वमिति चेन्मति[8] ॥
एकत्वे देशभेदोपि कथ सिध्यति तत्वत ।
तत एव सुखादन्यरोमहर्षादयो न कि ॥
अन्यत्वाद्रोमहर्षादे सुखस्य यदि भिन्नता ।
अन्यत्वे ग्राह्यमप्यन्यदिति कस्मान्न गृह्यते ॥

रोमहर्षादयोप्यस्मत्सम्विदन्तर्गता यदि ॥
कथन्तेभ्योन्यसत्तादिप्रतिभासगति स्फुटा ॥
अस्मात्सुख विनाप्यस्य रोमहर्षादयो यदि ।
अस्मद्ग्राह्यम्विनाप्यस्य रोमहर्षादयो न कि ॥
कालभेदेन तत्रापि यदि भेद (c. 46b) समिष्यते ।[9]
अभिन्नस्य स्वरूपेण कालभित्किङ्करिष्यति ।
अभेदोप्यस्तु तत्रापि परोक्षो न भवेदसौ ।
सम्वित्तिपरिहारेण स्थितमेक कथञ्च तत् ॥

**यदि तदेकमेवाथाप्यनुवर्त्तते कथमस्य परोक्षता । परस्परसम्वेदनपरिहारेण च व्यवस्थित कथमेकमिति चिन्त्यमेवैतत् । यदि च साधारणार्थं प्रतिभाति त्वया दृष्टं न वेति किमिति प्रश्न. ॥ प्रमाणान्तरसस्वादार्थ ॥ यदि प्रत्यक्षान्न प्रत्येति वचनादपि नै[10]व प्रत्येष्यति । तदपि स्वप्रतिभासमेव सूचयति त्वत्प्रतिभासितं मम प्रतिभातीति तेनापि वृथैव ज्ञातव्यं । तत इतरेतराश्रयदोषः । यच्च प्रत्यक्षेण न प्रतिपन्नं तत् कथं वचनात्प्रत्येतव्यं । नहि प्रत्यक्षेर्थे परोपदेशो गरीयान् । किञ्च ।**

प्रत्यक्षस्य प्रमाणत्वे वचनस्य प्रमाणता ।
वचनस्य प्रमाणत्वे प्रत्यक्षस्येत्यसम्विद ॥
परस्परसहायत्व न तैमिरिकयोर्द्वयो ।
न प्रत्येकमसामर्थ्ये[11] समुदायस्य तद्यत ।

**तस्माच्चक्षुरादिका[?क]रणाधीनस्वसम्वेदनत्वाद्विज्ञानमेव नीलादिकमित्यवेद्यवेदकाकारा बुद्धिरूपा बुद्धि । तथैव कृतव्यवस्थेयं बुद्धि. । तथैव वेदनादिति परमार्थ । तत. स्वसम्वेदनमेव फलमर्थ इति च निश्चयस्तत्रैव । नार्थसम्वेदनन्नामास्तीति । ततो यदुक्तं न ग्राह्यस्य स्वरूपग्राहकत्वे दृष्टान्तः कश्चिदस्तीति । .तत्र विपर्ययाभावेऽनुपलब्धिसाधिते कथमदृष्टान्तता (c 47a) । शशविषाणादि[12] रनुपलभ्यमानो दृष्टान्त. प्रत्यक्षप्रसिद्धे वा किं दृष्टान्तेन । ततो यदि शक्ष्यामो विस्पष्टं स्वाङगग्राह्यनिवारणम् । तदा शुद्ध एव ते पक्षो विशेषणरहित एव ग्राह्यनिवारणो भवेत् । तस्य च पक्षस्य प्रत्यक्षेण बाधनं । यतः प्रत्यक्षादेः प्रत्ययवर्गस्य बाह्यमेवालम्बनमवशिष्यते । स्वाङगग्राह्यनिवारणात् इति यदुक्त परेण, तदसङगतं । प्रत्यक्षस्य बाह्यविषयत्वाभावस्य प्रतिपादनात् स्वनिश्चयेनैव तेषा जाग्रत्प्र[13]त्ययानां बाधकरहितत्त्वेनावलम्बनत्त्वमिति चेत् । न ।**

स्वनिश्चितत्त्वमेतेषा स्वाङग एव समीक्ष्यते ।
निश्चयो बहिरर्थे तु नासावनवभासिते ॥

**प्रतिभासस्मरणातिरेकेण न निश्चयो नाम । न तावत्प्रतिभासनमर्थस्य प्रति-**

**भासाभावे च न स्मरण। ततोऽपरस्य निश्चयस्याभावात निश्चयो बहिरर्थ इति वचनमात्रकमेवैतदिति व्यर्थं।**

*दुष्टज्ञानगृहीतेर्थे प्रतिषेधो हि गृह्यते ।
अगृहीतग्रहग्राहनिषे[14]ध किन्न युक्तिमान् ।।
गृहीतमात्रबाधे तु स्वपक्षस्या[१]स्त्यसिद्धता ।
अगृहीतस्य सत्वन्तु भवता कथमुच्यते ।
अग्राह्यत्वाच्च भेदेन विशेषणविशेष्ययो ।
अप्रसि[२]द्धोभयार्थस्यावाच्यमन्यतरस्य वा ।।
भेदेन पूर्व्वग्रहणात्पश्चात्तत्त्वनिरूपने [?पणे] ।
न भेद परमार्थेन तत किम्वा विरुध्यते ।।
विशेषणविशेष्यत्त्व व्यावृत्तिपरिकल्पित ।
कार्यकृद्बौद्धराद्धान्ते न गत श्रुतिगोचर ।।
चक्षु[३]श्श्रोत्रोश्च यञ्ज्ञान (c 47b) विशे[15]षणविशेष्ययो ।
तन्निरालम्बनत्वेन स्ववाग्बाधो न कस्यचित् ।।
सम्भवोस्ति प्रभेदस्य विशेषणविशेष्ययो ।
ततो निरूपणा किन्न प्रतिज्ञातार्थस्य शोभना ।।
**अपि च ।**
निरालम्वनता नाम न किञ्चिद्वस्तु गम्यते ।
तेनैतद्व्यतिरेकादौ प्रश्नो नैवोपपत्तिमान् ।।
यद्यवस्तु कथन्त्वस्माँस्त्वबोधयितुमिच्छसि ।
बुध्यसे वा स्वबुध्या त्व कल्पयित्वाथ साध्यते ।
असत कल्पना कीदृक् क्लिष्टौ वस्तु प्रस[16]ज्यते । 7b
कथमिष्टमभावे चेद्वस्तु सोपीति वक्ष्यते ।।†

**उक्तमेतद्व्यावृत्तिभेदकल्पितेन रूपेण विशेषणविशेष्यभावो निरालम्बनत्व-कल्पितत्वाद्व्यालम्बनभेदेन पृथगिव व्यवस्थाप्यते। तथाभूतस्वरूपबोधनाय न**

---

*श्लोकवार्तिके एता कारिका २२५ पृष्ठे। पर तत्र 'अगृहीतग्रहग्राह–', 'अगृहीतस्य सत्व तु–'इत्यर्धद्वय, 'भेदेन पूर्वग्रहणात्—''विशेषणविशेष्यत्व—' इति श्लोकद्वय च नास्ति।

[१] श्लोकवार्तिके स्वपक्षोऽपि न सिद्ध्यतीति पाठ ।
[२] ,, अप्रसिद्धोभयत्व वेतिपाठ ।
[३] ,, वक्तृश्रोत्रोरिति पाठ ।
† श्लोकवार्तिके २२६ पृ ।

परमार्थतो भेदः प्रतिपाद्यतेऽभेदप्रतिपादनस्य वस्तुत्वात् । अवस्तुनि कल्पना कथमिति चेत् । अत एव । अन्यथा

वस्तुन कल्पना कीदृक् तथाऽवस्तु[1] प्रसज्यते ।
अभावे कल्पनावृत्तिर्न च वस्तु म विद्यते ॥
*अथ प्रत्यय इत्येष कर्मभावादि वा भवेत् ।
भावादिषु विरोध स्यात्कर्म चेत्सिद्धसाधन ।

कर्म न उच्यते प्रत्यय इत्येष धर्मिरूपोऽन्य· कर्मव्युत्पत्या वा स्यात् प्रत्याय्यत इति प्रत्यय । अथवा प्रतीति. प्रत्यय. । प्रत्याययति प्रत्याय्यतेऽनेनेति वा प्रत्यय इति । भावकर्तृकरणरूपता वा स्यात् सर्व्वमेतदनुपपन्नं । यदि प्रतीति प्रत्यय. (c 48a) सा प्रत्याय्येन वि[2]ना न भवति । एवं कर्त्रादिकमपि । ततश्च प्रत्यय इति बाह्यार्थापेक्ष । निरालम्बन इति तदभाव इति परस्परविरोधिता ।

तदसत् । यदि प्रतीतिः प्रत्यय· सा स्वात्मनिष्ठाऽन्येन विना न भवतीति कुत एतत् । अन्यस्य तस्यामदर्शनात् । स्वरूपमेव च तत्र प्रत्याय्यं भविष्यति किमन्येन । तथा च प्रतिपादितं । प्रत्याययति प्रत्याय्यतेऽनेनात्मैवेति किम्विरोधगतमत्र । कर्म चेत् कर्मत्वं नाम नावगम्यते । स्वरूपे[3]ण हि नीलादिक प्रतिभासते न तु तस्यापरा कर्मता नाम । यद्यसावन्येन कर्त्रा स्वव्यापारेणार्थ्यमान उपलभ्येत तदेवालम्बनमन्यस्य तच्च निराक्रियते यदि कथ सिद्धसाधनम् । कित्वसावर्थ्यमान एव न सिध्यति । ततः कथं कर्मतया तस्यालम्बनभावः । स्वरूपेण तदा लभ्यते चेदिदमिदानी सिद्धसाधनम् ।

नन्वालम्ब्यमान आत्मना अहृ नीलं प्रत्येमीति प्रतीयते । तदसत् ।

अहमित्यपि यत् ज्ञा[4]नन्तच्छरीरेन्द्रियात्मवित् ।
अहृ काण सुखी गौर समानाधारवेदनात् ।

न हीन्द्रियादिभ्योऽपरमात्मानमहं प्रत्ययालम्बनत्वेननोपलभामहे ।

येन प्रेरणमेतेषा स आत्मा चेदनन्यवित् ।
स्वस्वभावोदयादेषा प्रमाण नापर क्वचित् ।
उदयश्च यतो दृष्ट स एव प्रेरको यदि ।
(c 48b) अन्योन्यप्रत्ययत्वेन प्रेरकास्ते परस्परम् ।
समुदायात्तदन्यस्य समुदायस्य सम्भवे[5] (।)
कार्यकारणभावेन व्यवहार प्रवर्त्तते ॥

---

*श्लोकवार्तिके २२६ पृ ।

बुद्धिरूपविवेकेन प्रेरक नान्यदीप्स्यते ।
पूर्व्वपूर्व्वस्तथा भूताभ्यासो वा प्रेरक क्वचित् ॥
सुखेन्द्रियाकारबुद्धेर्यदि बुद्धचन्तरोदय ।
नीलाद्याकारता प्राप्त तत्कुत कर्मकर्तृता ॥
समानकालहेतौ वा व्यापारो न परस्पर ।
तत कर्मादिभावाना न भाव उपपत्तिमान् ।

**यदुक्त**

प्रत्य[1]यस्य हि रूपादेर्न्निरालम्बनतेष्यते ।[6]
स्वविज्ञानात्मकत्त्वेन किञ्चिन्नालम्वते ह्यसौ ॥*

**तदत्यन्तमसत्। यतः।**

प्रत्ययस्य न रूपादेर्न्निरालम्बनतेष्यते ।
स्वबोधरूपव्यावृत्त स्वाङगमालम्बते ह्यसौ ॥

**व्यतिरिक्तालम्बनत्वेन तु निरालम्बनता विज्ञानात्मकत्वेनैव सुतरामिति प्रतिपादितम्। यत्पुनरस्य चापि।**

कर्त्तृत्वे करणत्त्वे वा पक्षत्त्व शब्दयोरपि (।)
तन्निरालम्बनत्वेन पक्षाभाव प्रसज्यत (।) इति ।*

**तदतिसुभाषित । यतः ।[7] ताभ्यामपि किल प्रत्याय्यते निरालम्बनप्रत्यय-शब्दाभ्या ततः तयोरपि प्रत्ययत्वं। तदनालम्बनत्वेन कश्चित्प्रत्यक्ष शब्द-गतमात्रकमेव केवलं।**

अन्योन्यालम्बन तत्र व्यावृत्ति शब्दगोचर ।
तस्य सम्वादितामात्रात् पक्षत्व न विरुध्यते ।

**नहि शब्दगोचर एव पक्ष· । साधनविषयत्वात्तस्य । साधनञ्च प्रत्यक्ष-लक्षणोऽनुपलम्भ· । तेन (c. 49a) स्वाकारालम्बनता साध्या सा पक्षः ।[8] कथं पक्षाभाव· । प्रत्यय इति चात्र ज्ञान प्रकरणादवगतं तत्कथं शब्दद्वारकदूषणा-वसर । नहि यावद्वचुत्पत्त्या विषयीक्रियते स शब्दप्रतिपाद्योपि तु प्रकरणायात एवान्यथा न शब्दादर्थगतिः । सामान्यशब्दानामपि प्रकरणाद्विशेषवृत्तितोपलभ्यते, सैन्धवमानयेति यथा । भोजनबेलाया लवणस्यैव प्रतीतिः । इदमप्येकसद्द्वारेणैव गतं । यदाह ।**

---

[1] श्लोकवार्तिके प्रत्याय्यस्येति पाठ ।

* श्लोकवार्तिके २२७ पृष्ठे ।

प्रत्याय्येन च वाक्येन[१] वि॰ना कर्त्रास्य सम्भव ।
प्रत्यये तन्निमित्ते वा बध स्ववचनेन ते ।*

**यदि न प्रत्यायप[?य]ति किञ्चित्प्रत्याय्यते वा न तेन कथमसौ तथा, प्रत्ययविषयाभावे वा किम्विषया प्रतीतिरिति ॥ यत ।**

प्रत्याय्येन हि भिन्नेन विना कर्त्रादिसम्भव ।
प्रत्यये तन्निमित्ते च बाध स्ववचनात्कथ ।
कल्पित कर्मकर्त्रादि परमार्थो न विद्यते ।
आत्मानमात्मनैवात्मा निहन्तीति निरुच्यते ॥

**अबाह्यनिमित्तौ च[10] प्रत्ययशब्दार्थो न स्ववचनबाध. ॥**

अथापि रूढिरूपेण प्रत्यय स्यात्तथापितु ।
[२]कर्त्रादिक वस्तुन सिद्ध प्रत्ययोन्यस्य वस्तुन ॥*

**रूढिरुत्पलादिप्रतीतिनिरपेक्ष· प्रत्ययशब्दो व्यतिरिक्तस्यैव वस्तुन· सिद्ध· प्रत्यय इति। ततः सिद्धमेव लोकप्रसिद्ध्या बाह्यविषयत्वं। नहि लोकप्रसिद्ध-मन्यथा शक्यविधानं।**

**तदसत्।**

लोकप्रसिद्धिमात्रेण न वस्तूना व्यवस्थिति ।
(c 49b) विचारकस्य लोक[11]स्य वस्तुसिद्धौ निमित्तता ।
सम्वेदनातिरेकेण लोक को वार्थसिद्धये ।
सम्वेदनस्य लोकत्त्वे तदनालम्बनीकृत ॥
सम्वेदन विना लोको यदि तत्त्व विवेचयेत् ।
विवेचयेयु सर्वेमी जनात्मान शिलादय ॥

**यदप्युच्यते।**

तमभ्युपेत्य पक्षश्चेत् अभ्युपेत विरुध्यते ।
विशेष्य(स्याऽ)प्रसिद्धिश्च तवास्माकमतादृशे ।।†

**तादृशे वस्त्वन्तरप्रत्यायके तवासिद्धिर्विशेष्ये[12] प्रत्ययेऽस्माकमन्यथाभूते। तथा।**

आत्मधर्मस्वतन्त्रत्वकल्पने पि तथा भवेत् (।)
न च प्रत्ययमात्रत्व किञ्चिदस्य(स्त्य) निरूपणादि ति ।†

---

[१] श्लोकवार्तिके वाक्येनेत्यत्र भिन्नेनेति, बन्ध इत्यत्र बाध इति पाठ ।

* श्लोकवार्तिके २२७ पृष्ठे ।

[२] श्लोकवार्तिके ग्राहकं वस्तु सिद्ध न इति पाठ ।

† श्लोकवार्तिके २२८ पृष्ठे ।

तथा हि। यदि व्यतिरिक्तसाधनत्वमभ्युपगम्य प्रत्ययः पक्षीक्रियते स तथाभूतो धर्मी न भवतः सिद्धः। नहि बौद्धस्यैवमभ्युपगमः। अथ विपर्ययाभ्युपगमोऽव्यतिरिक्तसाधनत्वं तथासति प्रतिवादिनामस्माकमसिद्धः। न ह्यव्यतिरिक्तसाधनः प्रत्ययोरस्माभिरभ्युपगतः[13], एवमात्मधर्मत्वं बौद्धानामसिद्धं। स्वतन्त्रत्त्वं च मीमांसकानां। न च प्रत्ययमात्रमस्ति। यस्य धर्मित्त्वमुभयपक्षव्यतिरेकेण निरूपयितुमशक्यत्वादिति॥ तद्यथाकथञ्चिन्मुखमस्तीत्युक्तं। यत उक्तमेतत्।

विवादपदभूतस्यावश्यमेवाप्रसिद्धता ।
प्रसिद्धिस्तस्य चेज्ज्ञाता साधनं कस्य साधनम् ।

य एव हि व्यतिरिक्तसाधनधर्मः प्रत्ययस्य धर्मिणो (c 50a) विशेषणत्त्वेनासिद्धः[14] इति तदसिद्धिद्वारेण विशेष्यासिद्ध्युद्भावनार्थं भवता स एव विवादास्पदीभूतं भवता साध्यः, तेन च विशेषणेनासिद्धत्वमिष्यत एव धर्मिणः। साधनकाले यदि तु स एव सिद्धः किमिदानीं सिद्धोपस्थायिना साधनेन। नत्वसिद्धविशेषणः पक्षो दुष्ट एव यथा सांख्यं प्रति विनाशी शब्द इति।

तदसत्। यतः।

साख्यप्रत्यपि पक्षस्य दृष्टत्त्वं विनिवारितम् ।
नहि दृष्टा[15]न्तसिद्धेऽर्थे पक्षेऽसिद्धविशेषणः ।
अप्रसिद्धोर्थदृष्टान्ते विनाशो हेतुदुष्टता ।
अनैकान्तिकता वा स्याद्धेतोर्वा स्याद्विरुद्धता ॥ 8:

यदि पक्षे न सिद्धो निरास इति दोषः। तदसत्। तत एव साध्यते। ततोऽप्रसिद्धविशेषणत्त्वमेव पक्षस्यादोषः कथमसौ दोषः नहि स्वरूपमेव दोषः। अथ दृष्टान्तेऽसिद्धिस्तदा दृष्टान्तदोषो हेतुदोषो वेति न पक्षदोषता।

न चात्मधर्मताऽसिद्धौ धर्मानिप्रत्ययो भवेत् ।
न ह्याकाशगुणासिद्धौ[1] शब्दो धर्मी न सिद्ध्यति ॥

श्रोत्रग्रहणमात्रेणैव तस्य धर्मित्वं। अन्यथा न कश्चिद्धर्मी भवेत्प्रति बाद्युपक्षिप्तस्य धर्मस्य सर्व्वत्रासिद्धत्वात्। तस्मादयमदोष एवेति यत्किञ्चिदेतत्। तत एवापरमपि परोदितमयुक्तं।

शब्दार्थमात्ररूपेण यथान्येषां निरूपणं ।
तथापि भवतो न स्याद्बाद्यभेदमनिच्छत इति ॥*

*श्लोकवार्तिके २२८-२२९ पृष्ठे।

**वाचकाद्वद्यान्तरेभ्यश्च भेदानभ्युपगमा(c. 50b)द्यस्य च वादिनः शब्दार्थ-मात्रकरूपेणापि नि[2]रूपणमशक्यं सामान्यानभ्युपगमेन धर्मादिविकल्पने सति पर-वादिना तेन प्रत्यवस्थातुमशक्यमिति।**

**तदसत्। प्रत्यय इत्यविशेषणं शब्दार्थमात्रं, विज्ञानमिति योऽर्थ· प्रति-भासनमिति यस्य पर्यायः तस्य सिद्धत्वात्। असदेतत्। द्विचन्द्रादिप्रत्ययेन्यत्र च यत्प्रत्ययत्वं। तदेकाकारपरामर्षविषयसिद्धमेव। तस्य तु पुनः किन्तत्वमित्यपरं सकलं विचार्यत्वात्साध्यमध्यमध्यासीनमसिद्ध[3]मिति किमयुक्तं। अत्रासिद्धता पश्चादाक्षिप्य निराकरिष्यते। अन्यदुच्यते तावत्।**

निरालम्बनता चेह सर्व्वथा यदि साध्यते ।
विशेषणप्रसिद्धि स्याद् दृष्टान्तश्च न विद्यते ।*

**सर्व्व एव प्रत्ययो निरालम्बनः साध्यः। को दृष्टान्तस्तत्र। अथ जाग्रत्प्र-त्ययस्तथाप्यसिद्ध एव दृष्टान्तः। स्वप्नप्रत्ययस्यापि सालम्बनत्वात्कथञ्चि-त्तत्कालान्यकालवस्त्वालम्बनत्वात्। अथ तत्कालालम्बनाभावः। तदा**

केनचिच्चेत्प्रकारेण निरालम्बनतोच्यते[4] (।)
रसज्ञानस्य रूपादिशून्यत्वात्सिद्धसाधनम् ॥†

**यथा यस्य यदालम्बनन्तत्कालमन्यकालादि वा तथा तत्सालम्बनमभ्युप-गन्तव्यं। तथाप्यनालम्बनत्त्वे रसज्ञानमपि (c 51a) रूपेणानालम्बनमिति प्राप्तं तच्चेष्यत एवेति सिद्धसाधनं।**

अथ बुद्धिर्यदाकारा तदालम्बनवारणम् ।
स्वाकारस्याभ्युपेतत्वात्तदभावो विरुध्यते ॥†

**ग्राहकाङ्गो हि ज्ञानस्य नार्थाकारता। किन्तर्हि ज्ञानाकारतैवेति भवताम-भ्युपगमः। तत्रेदानी ज्ञानस्य ग्राह्याभावः प्रसक्तोऽनिष्टश्च। तत्र ग्राह्यात्म-नालम्ब्ये[5]न भाव्यं अथ बाह्यन्नालम्बनं।**

**तदसत्।**

बाह्यानालम्बनत्त्वेपि बाह्य इत्यग्रहो यदि ।
स्तम्भादौ नैव तद्बुद्धिरित्येव सिद्धसाधनम् ॥

**यत्रापि बहिर्घट इति बुद्धिस्तत्रापि न घट एवालम्बनं। अपि तु बहिर्विषय एव। तत्सामानाधिकरण्यात्तु घटे तथा प्रत्ययः।**

अथ स्तम्भादिरूपेण निरालम्बनतोच्यते ॥
सम्वेदनस्य दृष्टत्वात्तद्विरोध प्रसज्यते ॥

---

* श्लोकवार्तिके २२८-२२९ पृष्ठे।
†श्लोकवार्तिके २२९-२३० पृष्ठयो ।

द्विचन्द्रादिषु तुल्यञ्चेदिन्द्रियाप्राप्तितो हि स ॥

तत्रानालम्बनोक्ति स्यान्नार्थसम्वित्त्यभावत ।*

इन्द्रियेण चक्षुरादिना प्रा[6]प्तं गृह्णाति बुद्धिरिति निरालम्बनतोच्यते। द्वि-चन्द्रादिबुद्धे.। न तु तदालम्बनमेव। एकचन्द्रप्रतिपत्तिरासीदस्य प्रागिति तेन सम्प्रयोगेण इन्द्रियेण द्वयस्येत्यनालम्बना। न तु सर्व्वदाऽर्थ एव नास्ति। एकचन्द्र-दर्शने सति तद्विपर्यये नालम्बनत्वमिति कारणमनालम्बनत्वप्रतिपत्ते.। एतदेव दर्शयति।

सर्व्वत्रार्थेन्द्रियाणा न सयोग सदसत्तया।

(c 51b) सम्वित्तौ विद्यमानाया सदसद्ग्राह्यतास्थिति ।

भव्य†स्त्विन्द्रियादीनामभावाद् ग्रहणादृते ।

नाल[7]म्बनत्वहेतु स्यान्निषेधो[? ध]तेन‡ युज्यते ॥

निरालम्बनाः प्रत्यया इति। तदेतदलीककल्पनामलमलीमसञ्चेतः परेण साद (?) ज्ञानमाविष्कृतमिति महती मोहस्य महीयस्ता। तथा हि (––)

निरालम्बनशब्दस्य स्वाङगालम्बाभिधेयता ।

प्रसिद्धा चेत्प्रमाणेन दूषण दूषण कथम् ॥

परकल्पितबाह्यग्राह्यालम्बननिषेधेन स्वांगालम्बन एवाय शब्दः प्रयुक्त इति प्रकरणादितः प्रतीतिः। अन्यथा शब्दादन्यप्रतीत्यभावात्। तत्र शब्दादय-मर्थ[8] प्रतीयते लोके कथमस्य निरूपणमशक्यं।

ननु न तस्यापि वाचकाद्बाह्यान्तराच्च भेद इति कथं शब्दार्थमात्रस्य धर्मि-त्वमित्युक्त।

सत्यमुक्तमयुक्तन्तूक्तमिति किन्तेन। नेदमिदानीमेवाद्वैतमायातंयतो भेदो न स्यादपि तु भिन्न एव प्रत्ययान्तरेभ्यः परस्परञ्च। तत्र घटशब्दादन्यः प्रत्ययो-ऽन्यश्च घट. शब्दादित्यादि। शब्दाश्च गृहीतमेवार्थं प्राक् स्मरणविषयतामुप-नयन्ति। तत्र ये ते प्रत्यया नीलाद्यालम्बनत्वेन भवतः[9] प्रतीतिगोचरास्ते निरा-लम्बना इति परमावबोधयतः किमयुक्तं। यदि कश्चिदनग्निकमेव धूमं प्रत्येति स किमेव न वक्तव्यः, त्वयाऽनग्नित्वेन य· प्रतीयते धूम. स तथा न भवतीति। कुतो वा दोषसम्भावना वक्तुः (c 52a)। अथ साग्नित्त्वेन पूर्व्वदृष्टेन स बोधयेत्तं शक्य इह इतु कथं। इहापि निरालम्बनं तैमि(रि)कज्ञान सिद्धमेव बाह्यस्यासम्भवात्। तत्रापि गगनमालम्बनमिति चेत्। यथा तर्हि केशालम्बने

---

*श्लोकवार्तिके २२९-२३० पृष्ठयो ।

†भवत इति भोट भाषान्तरे ।

‡निषेधोतो न––इति हे पुस्तके ।

गगनमालम्बनं[10] तथा गगनालम्बनेपि अन्यदेव। प्रतिभासमानस्यालम्बनत्त्वाभावात्। प्रतिभासमानमेव गगनप्रत्यये आलम्बनमिति चेत्। इहाप्यस्त [?स्तु] केशप्रत्यये सर्व्वत्र विपरीतख्यातिस्मृतिसप्रमोषः। लौकिकत्वादिकल्पना न वा क्वचिदिति एकान्त एषः॥

अथ सालम्बनमेकचन्द्रज्ञानमुपलब्धवतो द्विचन्द्रविज्ञानं निरालम्बनमिति युक्तं। एकचन्द्रविज्ञानन्तु कथं। तदपि तज्जातीयत्वादिति प्रतिपादितं। बाधि[11]तत्वादिति चेत्। तत्रापि बाधितत्वमिति प्रतिपादितम्। न चाप्रतिभासमानमालम्बनमिति प्रतिपादयिष्यामः। ज्ञानत्वञ्च नीलादेः प्रतिपादयिष्यते। यथा च केशादिज्ञानमाकाशादीनामालम्बनं तथा नीलरूप ज्ञान पीतमधुरादिना सालम्बनमिति प्राप्तं। कथं रसाद्यनालम्बनत्वेन सिद्धसाधनं रूपज्ञानस्य। अथ रश्मितप्तोषरमन्तरेण न भवति जलज्ञानं रसादिकमन्तरेणापि किम्भवति रू[12]पविज्ञानं। भवति च सत्यजले तप्तोषरमन्तरेणापि जलज्ञान। विशेषस्तत्रेति चेत्। (c. 52b) परस्परस्य विशेषाद् द्वयमप्यनालम्बनमन्यथा चेति प्राप्तं। भवतु द्वयमपि सालम्बनमिति चेत्। यदि प्रतिभासमानेन रश्मितप्तोषरमित्यादि न वक्तव्यम्। अप्रतिभासमानमालम्बनं कारणत्त्वेनेति चेत्। वासना भविष्यतीति सिद्धमस्मत्समीहितं। प्रतिभासमानमेव तर्हि भवतु किमन्येनेति चे[13]त्। प्रत्यक्षानुमानयोर्भेदाभावप्रसङगात्। प्रतिभासमाने सकलं प्रत्यक्षमेव।

भ्रान्ताभ्रान्तविभागश्च न स्याल्लोकप्रसिद्धिभाक्।
स्वरूपे सर्व्वमभ्रान्त पररूपे विपर्यय।
प्राप्ते सालम्बनत्वञ्चेत् प्राप्तिर्न्नास्तीति साधित।
मरीचिकाजलभ्रान्ते प्राप्ति स्यादपि तद् भवेत्।
सर्व्वदा नास्ति सर्व्वत्र सर्व्वदा नेति दृश्यते॥
अविनष्टेषु भवेदेव विनाशी स कथम्भवेत्।
प्रत्यभिज्ञानिरस्तैव तत[14] सर्व्वं समजसम्।

तत्मात्प्रत्यक्षानुमानाभ्यां प्रतीते सकलमनालम्बनं। उक्त शेष॰॥

एव परपरिकल्पितं विशेषणमनूद्य॰ यदि तन्निराक्रियते क इवात्र दोषः। अनेनेदमपि निराकृतं। यदाह।

बहिर्भावाप्रसिद्धत्वात्तेनानालम्बना मति।
कथञ्च साध्यते नैष पक्षो हि ज्ञायते यदा॥*

तथा हि (—)

---

*श्लोकवार्तिके २३०–२३१ पृ

यथार्थ(न्य)बोधनाशक्तेन्नप्रसिद्धे विशेषणे ॥
पक्षसिद्धिस्तथैव स्याद्विशेषणविशेष[15]णे ॥
नाप्रसिद्धे पदार्थे हि वाक्यार्थ सम्प्रतीयते ।
तत्पूर्व्वकत्वात्पक्षश्च वाक्यार्थ स्थापयिष्यते ॥*

**मत्वर्थस्य साध्यत्वमिति स्थापयिष्यत इति।**

**तदेतदसदेव।** (c 53a) **येनैव बाह्यमालम्बनमसिद्धं परमार्थत। परेण केवलमभ्युप गत। तत एव निषिध्यते। भ्रान्तिनिरासाय साधनप्रवृत्तेरित्येतत्पश्चात्प्रतिपादयिष्यते। प्रमाणप्रसिद्धस्य तु कथमभावः साध्यः स्यात्। प्रमाणस्य बाधनद्वारेणे[16]ति चेत्। न। प्रमाणस्य प्रमाणेन बाधनायामनाश्वासेन प्रमाणतोच्छेदप्रसङ्गात्। न विरुद्धाव्यभिचारी नाम सम्भवतीति प्रतिपादयिष्यामः।** 8b
**देशकालादौ दृष्टस्यान्यत्र निषेध इति चेत्। न प्रागभावात्।**

नहि देशान्तरादौ यद्दृष्टमन्यत्र कल्प्यते ।
भ्रान्त्यभावेन तत्रास्य वृक्षभावस्य साधन ।

**अथ कुतश्चिच्छास्त्रादन्यतो वा प्रमाणाभावादन्यत्र कल्पना। नहि भ्रान्तयो न दृश्यन्ते। एवन्तर्हि**

प्रमाणदृष्टे या भ्रान्ति[1]र्देशादौ क्वचिदेव सा ।
निवर्त्यते प्रमाणेन भ्रान्तावेव तु काऽक्षमा ॥

**या हि कदाचिद्भ्रान्तिः सा निवर्त्त्यते। या तु पुनरसन्ती सा किन्निवर्त्तयितव्या। तन्निवर्त्तने महान् पुरुषकारः।**

**ननु साऽन्यत्र बाधकप्रमाणोपदर्शनेन निवर्त्त्यते। यदा तु सदा भ्रान्तिरेव सा कथन्निवर्त्तयितव्या। बाधकाभावाच्च कथं सा भ्रान्तिरित्युच्यते।**
**तदप्यसत्। यतो बाधको नाम नास्त्येव। तथा हि**

बाधक किन्तदुच्छेदी किम्वा ग्राह्यस्य हानिकृ[2]त् ।
ग्राह्याभावे ज्ञापको वा त्रय पक्षा पर कुत ॥

**यदि बाधको बाध्य**(c. 53b)**प्रत्ययाभावं करोति तदालम्बस्य वा। तदा तज्जातमजातं वा।**

अजातस्य कथन्तेन तस्याभावो विधीयता ।
न जातु खरशृङ्गस्य ध्वस केनचिदाहित ॥
जातस्यापि न भावस्य तथाभावो विधीयते ।
तदस्तिहेतो तन्नास्ति बाधकादिति साहसम् ।

---

*श्लोकवार्तिके २३०-२३१ पृ

**यथ [? दि] जातोसौ भावः केन तस्याभावः क्रियते। दैवरक्ताः किंशुकाः क एनानधुना रञ्जयति।**

**अथ जातः कारणात्तथा सति यथा जात· तथास्ति कथं विनाशावेश । तथा सति तदेव नष्टं तदेव सदिति महदसमञ्जसं। अथ यथा न जातस्तथा विनाश्यते। तथा सति ।**

अन्यरूपेण जातस्य यद्यन्येन विनाश्यता ।
नीलादेरन्यपीतादिरूपेणास्तु विनाश्यता ॥

**न च तस्य तद्रूपमिति त एव दैवरक्ता.। तेन च**

स्वरूपेणासौ पश्चाद्धि (वि)नाश्यतेऽथ सर्व्वदा ।
यदि पश्चाद्विनाश्येत पूर्व्व तद्रूपता भवेत् ।
तेन रूपेण जातस्य कथ पश्चाद्वि[4]नाशन ।
तदैव तेन रूपेण जात पश्चाद्विनाश्यते ।
पश्चात्तद्रूपनास्तित्वे दैवरक्त स किशुक ।
पूर्व्वमेवास्यनाश(श्च) कारणादेव तत्तथा ।
नाशकेन पर कार्य किमस्येति निरूप्यताम् ।

**एतदालम्बनविनाशेपि समानं। तथा हि।**

यथा स जातस्तेनास्य रूपेण न विनाशन ।
यथा न जातस्तेनापि न रूपेण विनाशन ।
व्यर्थकत्वादशक्यत्वात्प्रमाणेनाप्रतीतित ।
अस्यार्थस्य कथन्न स्यात्कल्पना[5]पि सचेतसाम् ॥

**अथालम्बनाभावं ज्ञापयति बाधकः।**

**तदप्यसत्** (c 54a)।*
यदा न दृश्यते भावोऽदर्शनन्तस्य बाधक ।
तदा भावाप्रसिद्धौ च नाभाव सविशेषण ।
विशेषणाप्रसिद्धौ च बोधशक्ति कथम्भव[? वेत्] ।
विशेषणमथान्य (स्यात्) सिद्धमत्रानुवादवत् ।
भावरूप हि तत्तत्र नाभावस्य विशेषणम् ।
तदेवान्यत्र नास्तीति यद्येव प्रतिपाद्यते ।

---

*गङ-छे द्ङोस्-दे मथोङ-ग्युर्-व । दे-छे मेद्-पर् र्तोग्स् म-यिन् ॥
(यदा स दृश्यते भावो नाभाव प्रत्ययस्तदा।)—इत्यधिक पाठो भोटभाषातरे ।

तथैव प्रतिपन्नस्य निषेधोस्य किमर्थक ।
अन्यथा प्रतिपन्नस्य तथा[6]पि न निषेधन ।
प्रागुक्तमेतदेवेति न पुन पुनरुच्यते ।
न दृश्यते यदा भाव तदा न स्यान्निषेधन ।
स्मृत्याव्याकृत्य तत्रास्य क्रियते चेन्निषेधन ।
स्मृत्यानुरूपग्रहणे न कथञ्चिन्निषेधन ।
स्मृत्या स्वरूपग्रहणे नाभावस्य विशेषणम् ।
अथ स्मृतो विकल्पे वा यदेव प्रतिभासते ।
तत्तावन्मात्रमेवास्ति बाह्यरूप न विद्यते ।

**एवं तर्हि**

लोकप्रतीतावन्यत्र यद्बाह्यमिति भासते ।
तत्तावन्मात्रमेवास्ति [7] न तु तत्तत्त्वमीक्ष्यते ।
प्रतीतिमात्रमालम्बो न तु तद्बाह्यमीक्ष्यते ।
स्वप्नादिप्रत्ययेभ्योस्य विशेषग्रहणन्नहि ।
प्रतीतिमात्रकादस्य वासना च न निर्मितान् (।)
न विशेषपरिच्छेद इत्यनालम्बना मति ।

**कथन्तर्हि बाध्यबाधकभावप्रतीतिः।**

प्रतीयमानस्यैकत्व भाविनारोप्य तत्र च ।
बाधकप्रत्ययापाते तन्मध्ये बाधकस्थिति ।
बाधको यदि नाय स्यादेवमेव भवेदयम् ।
अविच्छिन्न(C 54b)स्ततश्छेदकारणम्बाधको मत ।

**तथा हि[8] कालान्तरस्थायिता सकलस्य भावस्य। तत्कालमध्य एव यदाऽपरस्वरूपनिरूपणापरः प्रत्ययो भवति। तदा तेन विच्छिन्नं पूर्व्वकमालम्बन प्रत्ययो वाऽध्यवसायविषयः। तेन स बाधको व्यवस्थाप्यते। तथा हि य(त्) स्वयं न स्यात्तदाऽविच्छिन्नमेव पूर्व्वकविज्ञानालम्बन भवेदन्यकालवत्। ततोऽन्वयव्यतिरेकाभ्या बाधकेन विच्छिन्नमिति गम्यते। एवं विनाश्यविनाशकभाव आलम्ब्यआ(म्ब्या)लम्बनभावश्च।[9] तथा हि।**

परोक्षे भाविनामर्थे विनिश्चित्य घटादिके ।
तदाकारोदयञ्ज्ञानन्तदालम्बनतास्थिति ।

**तथा**

स्वच्छ स्फटिकवज्ज्ञान यो यस्तत्रापचीयते ।
त तमाकारमासाद्य तञ्चकास्ति तथा तथा ।

ऽ(अ)परोक्षस्तावदस्तीति (कु)तश्चिदागमादनुमानतो वावसितः स्वच्छञ्च विज्ञानं। यदि न स्यादयमर्थ. परिप्लवेनैव केवलं किमस्ति किमत्र नास्तीति। परिदृष्टे चार्थात्मनि प्लवमान इव तीरमासाद्य स्थिरीभ[10]वति तेन तदालम्बनमिति व्यवस्थाप्यते। तथा हि।

चिन्ताव्यापृतचेतस्क प्लवमानेन चेतसा।
इद तदा दृष्टमिति पूर्व्वदृष्टे स्थिरीभवेत्।

दृष्टश्रुतविस्मृतं हि विकल्पयन् कि किं दृष्ट तत्र प्रपञ्चकथाया श्रुतम्वेति पर्यन्वेषणपरो यदा यथाश्रुतादिकमभिमुखीकरोति तदाभिमुखीकृते स्थिरत्त्वेन तत्र प्लवमानतापरित्यागनिमित्तमालम्बनतया(c 55a)व्यवस्थापयतीति लोकव्यवहारः।

तत्त्वमेव किमेव चेत्[11] न भवत्यस्य वस्तुन।
न प्रत्यक्षानुमानाभ्यामप्रतीतेरवस्तुता।

न तावत्परोक्षस्य सत्ता प्रत्यक्षेण प्रतीयते। तदभावादनुमानमपि नेति क्रम.। सति परोक्षप्रतीतौ सद्भावे तदालम्बनता प्रत्यक्षस्य सिध्येत्। नालम्बनतायाञ्च प्रत्यक्षस्य वस्तुसम्बद्धं सिध्यति। ततोऽनुमानं तत्प्रतिबद्धवस्तुलिङ्गोदयाद्वस्तु गमयति ततोऽनुमानप्रसिद्धवस्तुविषयत्वात्सालम्बनं प्रत्यक्षं ततो वस्तुसम्ब[12]-न्धोऽनुमानस्य. ततो वस्तुगतिरिति चक्रकमव्यवस्थापि भवेदिति न वस्तुप्रति-पत्तिसम्भवः॥

एवमप्रतिपन्ने हि वस्तुन्युपगम पर।
प्रमाणरूपाविज्ञानात्पूर्वसम्वित्ति वस्तु (?)सम्भवात्।
तत्प्रतीत्यनुसारेण विशेषणविशेष्यता।
मया प्राक् प्रत्यपादीद तद्रूपामर्थवर्णनात्।
त्वया वा पुनरामर्शे(?)कथमसस्त्वस्य वेदन।
एव निरूपणायाञ्चेत् स तथा नास्ति तत्त्वत।
नास्त्येव तत्र को दो[13]षो यत पर्यनुयुज्यते॥
बाध्यबाधकभावश्चेत् प्रतीत्यो परपूर्व्वयो।
स्वप्रतीतौ कस्य दोषो येन पर्यनुयुज्यते (।)
आत्मानमेव कि कश्चिदनुयुञ्जन् प्रवेद्यते॥
भ्रान्तिरेव क्रमस्तस्मान्नात्मोपमात्वयोगभाक्।
भ्रान्तित्वे वासिते (c 55b) त्वत्र कारणान्वेषणेन कि॥
परोपि प्रतिपाद्येत यदैव स्वपरिस्फुट।
तदा सोपि नवक्त्येव कुतो मे भ्रान्तिरीदृशी।

यदा हि भ्रान्तिसम्भवे स्वयं परामर्शवत. पुन[14]रसौ निवर्त्तते नेदं रजत-मिति तदा किमात्मन. पर्यनुयोग कश्चित्करोति (—) कथमहमप्रतिपन्ने रजते तद्विशेषणमभावं प्रतिपाद्ये विशेषणे चाप्रसिद्धे कथन्तद्विशेषणे चाप्रसिद्धे कथ-न्तद्विशेषण परोक्षं जानीया। येन मम पक्षदोषो न भवेत्। परप्रतिपादनेप्येव-मेव ॥

ननु तत्र सत्यरजतदर्शने सम्भवति भ्रान्तिरिह पुनर्न्न किञ्चिद् दृष्टमिति कुतो भ्रान्ति.[15] एतदुत्तरत्र प्रतिपादयिष्याम.। अपि च। भ्रान्तिश्चेत्परमार्थेन कथञ्चिदवगता किमिदानीं भ्रान्तिकारणान्वेषणप्रयासेन। यदि कारणं नास्ति भ्रान्तिरेव न भवेत्।

नैतदस्ति।

कारणे सति न भ्रान्ति परमार्थेपि कारणम्।
सकारणत्वाद् भ्रान्तिश्चेत्तदापीष्ट विहन्यते ॥

न कारणमस्तीत्येव भ्रान्ति.। अन्यथा सर्व्वा भवेद् भवतो भ्रान्तिः। अभ्रा-न्तावपि पर्यनुयोगेन भवितव्य[16]मेव कुत इव भ्रान्ति.। तथाप्रतीतेरिति चेत्। भ्रान्तावपि *[न (c 32a6,7) मानमेतत्। अभ्रान्तिपूर्व्विका भ्रान्तिश्चेत्। यदि 9a
कथञ्चिदभ्रान्तिर्न्नाम नास्त्येव कारणाभावात्किन्न भ्रान्त्या भवितव्यम्। भवतु कथ प्रत्येतव्या। अभ्रान्तिविपर्ययेन (ण) हि भ्रान्तिरिति व्यवस्थाप्यते। समानमितरत्रापि भ्रान्तिविपर्ययेणाप्यभ्रान्तिरिति। (c. 33b) अथ विधिरूपेण भ्रान्तिर्न्न तु भ्रान्तिविपर्ययेण॥ भ्रान्तिस्तु बाधके सति। ततो विपर्ययादेवाभ्रान्तिरिति।

तदप्यसत्।

विधि रू[1] पेण यद् दृष्ट तदेव हि तथेयते (।)
न बाह्यविधिरस्तीति भ्रान्तिस्तत्रेति निश्चय ॥

अथ यत्र कारणं सा भ्रान्तिरिति नोच्यते। या भ्रान्तिः सा कारणम्विना न भवतीति। एवन्तर्हि सविशेषणो हेतुः।

भ्रान्तिकारणसद्भावाद् भ्रान्तिर्भवति नान्यथा।
ज्ञाते च भ्रान्तरूपत्वे तत्कारणविनिश्चय ।

सविशेषणे हि हेतौ भ्रान्तिः प्रथम ज्ञातव्या. पुनः सापि भ्रान्तिः कारणा-विति. अनवस्था। तस्माद्येन रूपेण सा भ्रान्तिस्तद्रूपविज्ञानादेव व्यवस्था[2]कारणं भवतु मा वाभूत्। स्वरूपेण हि भावो भवति न कारणरूपेण। तत्स्वरूपं कुत इति

---

* इतोऽग्रे बन्धनीस्थ पाठ (c 33a6-34a3) पृष्ठयो स्थापित प्रमादेन।

**चेत्। किमनेन। इयमपि भ्रान्तिस्वरूपप्रतिपत्तिर्भ्रान्तिर्न्न भवतीति कुतः। यथेयं प्रतिपन्ना तथा यदीयमपि भवतु को दोषः। पूर्व्विका न भ्रान्तिरिति चेत्। तदप्यसत्।**

रजतप्रतिपत्ति स्यात् शुक्तिकाप्रत्ययक्षये ।
शुक्तिकाप्रत्ययस्यापि यद्यन्य क्षयकारक ॥
तत कि सत्यता तस्य प्रत्ययस्य भवेत्पुन ।
रजतग्राहिण किम्वा[3] द्वय नास्तीति नेक्ष्यते ।
अथापि (c. 342a 1-3) सत्यता क्वापि प्रतीता यदि तद्भवेत् ।
तत्रावष्टम्भसद्भावादितरत्र विपर्य्यय ॥
बाधकप्रत्यये हि स्यादितरत्र विपर्यय ।
बाधको यदि नास्त्येव तद्विपर्ययप्रत्यये ॥
विपर्ययस्यासद्भाव कस्तदा प्रतिपादयेत् ।

**अत्रोच्यते।**

यदि विपर्ययवित्तिरथान्यथा कथमिवाभवनस्य विनिश्चय ।
अनुपलब्धिकृतोथ विनिश्चय किमपरेण विनिश्चयकारिणा ।
विपर्ययोपलब्धि[4]श्चेत्तस्यासिद्धिर्न्निरुच्यते ।
स्वसम्विन्मात्रमेवास्तु बाह्यस्यासम्विदा तत ।]

**तस्मादनुपलब्धिरेव बाधकं प्रमाण नापरमिति न्यायः। सा चात्राप्यस्तीति. कथं सालम्बनम्विज्ञानमिति। ततोऽवेद्यवेदकान्नाबुद्धि ॥**

**यत्पुनरुक्तं मत्वर्थनिरास. साध्यत इति तदप्यत्यन्तमयुक्तं ।**

(c 56a) मत्वर्थाभाव एवात्र साध्यते परमार्थत ।
निरालम्बन(त्व)साध्यमन्यथा न भवेत्तदा ।

**निरालम्बन विज्ञानमिति। आलम्बनत्वस्याभाव[5]: साधयितु प्रस्तुतो, येन कथन्तस्य स एव साध्य इत्युपरि निक्षिप्यते। इच्छया हि विषयीकृतः पक्षः स कथमन्यथा क्रियेत। यो य. साधयितुमिष्ट· स एव पक्ष·। अथ स तथाभूत. साधयितुमशक्यः। तथा सति हेतुदोष एवासौ न पक्षदोष·। अभाववस्त्वेन साधने मत्वर्थ एव।**

**ननु पारमार्थिकमत्वर्थसाध्यताया प्रमाणमस्ति। कल्पितस्य धर्मिधर्मभावस्याश्रयणात्। अन्यव्यावृत्तिद्वारेण स्वभावभूत[6] एव धर्मो व्यतिरेकेण व्यवस्थाप्योऽर्थवत्तया कल्प्यते तत्र यद्यपि नामायं संवृत्या व्यवहारः तथापि न तावता क्षति.।**

ग ज नि मी ल ने न तावदयं व्यवहार. प्रवर्त्यता। पुनरयमपि निरूप्यमाणो विशीर्येत एव।

ननु केय स म्वृ ति । यदि वस्तु तदेव वक्तव्यम्। किन्तत्र नामान्तरेण। अथ नास्ति किञ्चित्तदा सम्वृतिरिति किन्नामान्तरेण।

सत्याभास परन्तत्र न तत्त्व परमार्थत ।
विचार्यमा[7] णशून्यत्वे स म्वृ ति सेति गीयते ।।

तत्त्वसम्वरणात्सम्वृतिः । प्रतिभासमानं हि रूपमसदिति न तावता युक्त। विचार्यमाणताया पुनरसत्वादभावनिश्चय.। तत परमार्थपेक्षया संवृतिरुच्यते। सवृत्यास्तीति (c 56b) भ्रान्तजनापेक्षयास्तीति। न च भ्रान्तस्य बाधकोदय इति सत्यतयाऽभिमानात्सवृतिसत्यन्तदुच्यते। तत इदमपि वक्तुमेव।

अभावे भ्रान्तता केय भावश्चेद् भ्रान्तता कथम् ।
अतत्त्वभासो [8] भ्रान्तिश्चेदतत्वे सम्वृतिर्न्न किम् ।।
अतत्त्वे सत्यता नो चेत्सत्याभासो भवेन्न कि ।
तत सवृतिसत्यत्व सत्याभासत्वमित्यपि ।।
वञ्चनोक्ति कथन्तस्यान्तालावक्रासवादिवत् ।।
यस्य सत्यावभासित्वमसत्येप्यसमञ्जस ।
तस्यावभासित्त्वकथने (भवेत्) कैव वञ्चना ।
तस्मात्पराशयाज्ञाने स्वात्मोत्कर्षाभिधित्सया ।
प्रलाप केवलन्तस्मादन्या नास्त्येववञ्चना ।।

तदास्तान्तावदेतत्। अन्यदुच्यते। यदत्रैव प[9]रेणोक्त.

पर्युदासे निषेधे वा व्यतिरिक्तस्य वस्तुन ।
प्रमेयत्वाद्यभेदेन जगत सिद्धसाधनम् ।*

प्रमेयत्वेन व्यतिरिक्ततैव नास्ति सम्वेदनात्सर्व्वस्य जगत । व्यतिरिक्तस्यालम्बनस्याभावात्। सिद्धमेव साधन।।

यदि चात्यन्तभिन्नेन निरालम्बनतोच्यते ।
कथञ्चिच्चेत् विरुध्येत प्राक्पक्ष कल्पितेन ते ।*
वस्त्वाद्याकारभेदेन धीर्निरालम्बनेष्यते ।।
ग्राहकाच्चेदभिन्नत्व शक्तिभेदो विरु[10]ध्यते ।
निरालम्बनबुद्धेश्च यद्युत्पत्ति प्रसाध्यते ।
दृष्टत्वात्सेष्यतेऽस्माभिर्बाह्यग्राह्यविवर्जिता ।

---

* श्लोकवार्तिके २३१–३२ पृ०।

सम्यक्त्व पुनरेतस्यास्त्व नेच्छसि कथञ्चन ।
आत्माशेऽवसिता ह्येषा मृगतृष्णाम्बुबुद्धिवत् ।
चैत्यादिप्रत्ययानाञ्च निरालम्बनता यदि ।
धर्मभूता न गृह्येत साधनोत्थितया धिया ।
ततो विषयनानात्वात्प्रतियोग्यनिराकृते ।
रूपात्तत्राल(म्ब)नप्राप्ति सती (C 57a) केन निवार्यते ।
यदि प्रत्ययशब्दोपि प्रत्ययत्वेन गृह्यते ।
सम्वित्त्यालम्बनत्वञ्च वार्यते सिद्धसाधनम् ।
बुद्ध्युत्पादनशक्तिश्चेद्वार्या साध्यन्न सिध्यति ।
साधनस्य प्रयोगे हि बोधकत्वाद्विना न ते ।
न चाभिधास्त्यसम्बद्धादृते भेदाच्च नास्त्यसौ ।
न चासौ तद्गतम्भेद बोधयन्त्या धिया विना ।
प्राश्निकैर्न्नगृहीते च वाक्ये सावयवे पृथक् ।
पक्षे हेतौ सदृष्टान्ते वादिनि प्रतिवादिनि ।
साधनस्य प्रयोग स्यात्तदुत्पत्त्येष्यते यदि ।
पूर्व्वाभ्युपगमेनैव प्रतिज्ञा बाध्यते [12] तदा ।*

**इति सकल यत्किञ्चिदेतत् ।। यत. (—)**

विज्ञानाद्व्यतिरिक्तेन निरालम्बनमुच्यते ।
न च नीलादिको बोधात्तद्धर्मोपि ततोऽपृथक् ।

**यद्यपि ज्ञेयवादिनाऽस्य धर्मेण तद्धर्मत्त्वमभे(?द)स्तथापि ज्ञानत्वस्याभावाद्व्यतिरक्त एवासौ। नहि मनुष्यत्वयोगेपि ब्राह्मणादव्यतिरिक्तो भवति चण्डालः। ततो विज्ञानमप्यत्र व्यतिरेकिणालम्बनेन न सालम्बनमिति ज्ञानत्वरहितेनेति प्रकरणाद् गतिः।[13] प्रमेयत्वञ्च यद्यव्यतिरिक्त प्रमेयात्ततो विज्ञानादस्य भेद** 9b
**इति कुतः सिद्धसाधनं ।**

प्रमेयत्वादभेदश्चेत् सम्वेदनतदन्ययो ।
सम्वेदनात्तदन्यत्त्व नास्त्येव ज्ञानमेव तत् ।
अत्यन्तभिन्नापेक्षायामनालम्बनसाधने ।
सिद्धसाधनता कस्मादबोधत्वेऽतिभिन्नता ।।

**यदि केनचिदप्याकारेण भेदः सर्व्वदा भेद एव भिन्नाभिन्नस्य** (C 57b) **द्रष्टुमशक्यत्त्वात्ततो भिन्नस्यात्यन्त भेद एव तदालम्बनत्वे स्वांगालम्बनत्वमेव**[1]

---

* श्लोकवार्तिके पृ० २३२–३४ क्वचित्पाठभेदोपि ।

केवलन्तत. कथ सिद्धसाधनता। ज्ञानाकारतया चाभेदे ग्राह्यस्य भवत्ववान्तरभेद', तथापि तद्व्यतिरिक्तालम्बनमेव।

बोधरूपम्य सद्भावे द्वयो सालम्वन कथ ।
द्वयोरपि न बोधत्वे तदस्ति सुखदु खयो ॥
ग्राह्यग्राहकभेदश्चेत् कथम्बोधादभिन्नयो ।
सितनीलादिभेदश्च न कस्याभेदनास्तिता ॥
सुखदु खादिभेदोय यथा बोधात्मनोरपि ।
सितनीलादिभेदोपि न न ग्राह्येतरात्मवित् ।

यथा[2] सुखदु खयो तत्वभेदो बोधत्त्वादभेदेपि तथा सितसातात्मतयापि भेदे को विरोध । ग्राह्यग्राहकाकारात्मता तु न प्रतिभात्येव। नहि सितसातादि-व्यतिरेकेण ग्राहकादिता प्रतिभासमानोपलभ्यते॥

तस्माद् ग्राहकादिव्यपदेशो दुरात्मभिः स्वमनीषिकाविप्रणष्टैरुपाक्षिप्त. ।

निरालम्बनबुद्धेश्च यद्युत्पत्ति प्रसाध्यते ।
स एव पक्ष प्राक्पक्षात्कथम्भेदेन दर्शित ।
सर्व्वा बुद्धिन्निरालम्बा[3] सर्व्वोत्पत्तिमती तथा ।
नानयो साधने भेद कथन्धर्मो न साध्यते ।
धर्मभूतैव साध्येय साधनोत्थितया धिया ।
बुद्धौ सालम्बनत्त्व स्यान्निरालम्बतया क्षतम् ।

यदाहि यदा निरालम्बना सर्व्वा बुद्धिरुदयवती साध्यते। तदार्थतो निरा-लम्बनतैव धर्मभूता साध्यते। (C. 58a) तथा सति सालम्बनता भ्रान्तिवशाद-भ्युपगम्यमाना निराक्रियत एव। कथ साधनोपन्यासो व्यर्थः। प्रत्ययशब्दे तु प्रत्ययशब्दो न वर्त्तत एव प्रकरणादितिप्र[1]तिपादित। तत सिद्धसाधनता कथ-मसम्वेदनात्मत्त्वाच्छब्दस्येति। बुद्धचुत्पादनशक्ति निषेधस्तु नाभिप्रेत एव। येन साधनव्यर्थता भवेत्। नहि बुद्धिरेव नोत्पत्तिमती। निरालम्बनवादस्यायमर्थः।

ननु यदि बुद्धिरुदयवत्यपि निरालम्बना किन्नयोत्पन्नयापि। अथ साल-म्बना तदा तयैवानैकान्तिकत्त्वं (।)

तदप्यसत्।

अन्यापोहस्य साध्यत्वात् व्यावृत्ति परवञ्चिते ।
क्रियते साधनेनेति व्यर्थक साधन कथम् ।[5]

निरालम्बना सकला बुद्धिरिति प्रमाणेन केनचित्प्रतिपत्तव्य एषोऽर्थ.। कथमन्यथा साधनोपन्यासः। ततश्च साधनानिरालम्बनबुद्धेरपि निरालम्बन-

तैव साध्यते। तस्या निरालम्बनत्वे कथ निरालम्बनत्वसिद्धिः । नानुमानस्य सम्वादेन प्रामाण्यात् न सालम्बनत्वेन। सालम्बनता नास्तीति कथं सम्वादः। आलम्बनस्यानुपलब्धे । नास्तीति बुद्धे. कथं सम्वादो यदि दृश्यानुपलब्ध्या पश्चात्तदासौ पदार्थो नोप[6]लभ्यते।। एवञ्चेदनालम्बनापि बुद्धिस्तत्त्वनिश्चय-निबन्धनम्। ततोन्यापोहबोधक एव साधनप्रयोगो नाबोधक.। (c 58b) ततोन्यापोहेपि शब्दार्थे सम्बन्धोस्त्येव पदार्थाना। भेदोपि काल्पनिकः। पश्चाच्च सावयवः सवृत्त्या भवत्येव भेदग्रहणविषयः। वादिप्रतिवादिनोर्भेदग्रहणं कि प्रथम-मेव विशीर्यते। तदपि च पश्चात्स्वप्नवदेव निरालम्बनन्तदा च निर्वृत्ते कार्ये किमिदानीमसिद्धतादिचोद[7]ना करिष्यति। अपि च। प्रतिपादितमेव तत्पुरस्ता-दिति किमनेन चोदितेन।

स्त्रीशूद्रविस्मापनमेव दुष्टैस्तत्वानभिज्ञैर्गदितम्वराकैर् ( )
न तत्त्वबोधस्य पुन पुरस्तादयुक्तियोगि प्रलय प्रयाति ।।

तस्मादभ्युपगम्यापि भेदप्रपञ्चपक्षादिक गजनिमीलनेन पुन. परामर्श प्रक्रमेण तदभावसाधनेन दोषः।

नन्वहं स्वप्रतिभासमेव केवल प्रतिपद्ये. इति प्रतिपादयन्परप्रतिपत्ता बाध्यते परेण[8] तदा प्रतीयत एव। ततः कथ स्वागालम्बना सिध्यति बुद्धि॰।

तदसत्। परेण प्रतीयते इति नात्र प्रमाणमिति प्रतिपादितं। प्राश्निका-नामपि स्वागमात्रकादपरत्र नास्ति प्रतीतिः। इति निरालम्बनवचनादस्यैव प्रतीतिस्तत कुत. प्रमाणादेषा तव प्रतीतिर्भेदग्रहणमन्तरेण प्राश्निकाना न साधनवृत्तिरिति। अथ ये भेदप्रतीतिमन्तो न भवन्ति ते न प्राश्निका इति ।।

तदसत्।

ये तत्व प्रतियन्त्यत्र तेषा प्राश्निकता[9] न चेत् ।
अतत्त्ववेदिना नैव प्राश्निकत्वेधिकारिता ।।
अथैकपक्षपातेन प्राश्निकत्व न विद्यते ।
पक्षपातविनिर्मुक्त कुत एव भविष्यति ।।
परस्परविरुद्ध हि द्वयम्बोद्धुमसाप्रतम् ।
एकैकबोधादेकत्र पक्षपातस्य सम्भव ।।
(c 59a) तत प्राश्निकयोरेव परस्परविरुद्धयो ।
विवादे प्राश्निकैरन्यैर्भाव्यमित्यनवस्थिति ।।
वादिन प्राश्निकत्वञ्चेदितरेतरसश्रय ।
तयोरपि यतो नून[10] पक्षपात स्वपक्षिणि ।।

तस्मात्प्रमाणपातत्वे नियताभ्युपगम्यता ।

यत्तु प्रागभ्युपगत तद्विरोधि तदस्य ते ।

**प्राश्निकाना यदा पक्षवादिप्रतिवादिषु भेदबुद्धिः ।**

**तथापि यद्यमौ वादिवचनाद्विपर्येति प्रमाणबलायाताश्च तत्र तैर्व्विरोद्धव्यम् । स्वबुद्ध्या निरूपयतां तेषा यदि तत्परिशुद्ध भवति कस्तत्रानभ्युपगमे हेतुः। ततः पूर्व्वाभ्युपगमेन यथा कथञ्चिदस्य वाचा ।**

**नन्वनेन प्रमाणब[11]लेनापि पूर्व्वस्येति किमिदमनलसमप्युच्चैरुच्यते ।।**

यत्र सत्याभिमानोस्ति सा निरालम्बना मति ।

इति पक्षे विरोध किन्तत्सत्यत्त्वमनिच्छत ।

**अथापि स्यात् ।**

"धर्मा*धर्मादिबोधे च नासिद्धे परमार्थत ।

शिष्यात्मनोश्च धर्मादिरुपदेशोऽवकल्पते ।

तदनुष्ठानतो बुद्धैरिष्टो भेद स्फुटञ्च तै ।

सूत्रान्तरेभ्युपेतत्वाद् भवेदागमबाधनम् ।

सर्व्वलोकप्रसिध्या च भवेत्पक्ष[१]स्य बाधनम् ।

कृत्स्नसाधन[12] बुद्धिश्च यदि मिथ्येष्यते तत ।

सर्व्वाभावो यथेष्टम्वा न्यूनता† ह्यभिधीयते ।

तेषा सालम्बनत्वे वा तैरनेकान्तिको भवेत् ।।

तदन्यस्य प्रतिज्ञा चेत् तदन्यप्रत्ययो मृषा ।

(c 59b) पक्षा[२]द्यनन्तगमना‡त्तस्य पक्षादिता नहि ।

तन्मिथ्यात्वप्रसङ्गेन सर्व्व पूर्व्व न सिध्यति ।

साध्य[३]साधनविज्ञानभेदो नहि तदा भवेत् ।

यावद्यावत्प्रतिज्ञैव[४]न्तदनस्येतिभास्य[? ष्य]ते ।

तावत्तावत्परेषा स्यान्मिथ्यात्वा[५]दाद्यबाधनम् ।।

---

* श्लोकवार्तिके पृ २३४— । † ibid मुद्रिते ग्रथे—न्यूनत्त्व ।

‡ ibid मुद्रिते ग्रथे—नन्तगमना ।

[१]श्लोकवार्तिके पक्षवाधोत्रते ध्रुवमिति पाठ ।

[२]श्लोकवार्तिके पक्षाद्येत्ययमर्धोनास्ति ।

[३]श्लोकवार्तिके स्तम्भादि साधनज्ञानेति पाठ ।

[४]श्लोकवार्तिके यावद्यावत्प्रतिज्ञेय नदन्यस्य प्रतीयते इति पाठ ।

[५]श्लोकवार्तिके दन्य बाधनमिति पाठ ।

विरुद्धाव्यभि[14]चारित्व बाधो नाप्यनुमानत ।
इत्थ सर्व्वेषु पक्षेपु वक्तव्य प्रतिसाधन ।
बाह्यार्थालम्बना बुद्धिरिति सम्यक्त्वधीरियम् ।
बाधकापेतबुद्धित्वाद्यथा स्वप्नादिवाधधी ।
सापि मिथ्येति चेद्ब्रूयात्स्वप्नादीनामबाधने ।
न स्या*त्साधर्म्यदृष्टान्तो भवत साधनेधुना ॥
विज्ञानास्तित्त्वभिन्नत्त्वक्षणिकत्वादिधीस्तथा ।
सत्या[१] चेदभ्युपेयेत तदानैकान्तिको भवेत् ॥
तन्मिथ्याप्रतिप[२]त्तौ वा पक्षवाध प्रसज्यते ।
तथा[15] च बद्धमुक्तादिव्यवस्था न प्रकल्पते ।
ततश्च मोक्षयत्नस्य वैफल्य व प्रसज्यते ॥"†
**तदेतदसत् । यत. ।**
अयत्व [? तत्वं] यद्यभिप्रेत्य ससारिप्रत्यय स्थित ।
धर्माधर्मादिचिन्तेयन्तदेतन्न समञ्जसम् ॥
अतत्वेपीष्टतादित्व बालक्रीडावदिष्यते ।
तत इष्टप्रसिध्यर्थं धर्मो नैवोपदिश्यते ॥

**इष्टसाधनस्य धर्मत्वमिति भेदमसौ ससारी निश्चिनोत्येव तस्य भेदवासनानपगमात् । यदा च तस्य मुक्तता तदा न केनचिदपि तस्य प्रयोजनम् । नहि बा[1]लक्रीडाविषयेष्टसिध्यर्थं परमार्थवित्प्रवर्त्तते** (।) **यतः ।**

प्रवर्त्तते जन सर्व्वस्तत्र यत्रास्ति तत्त्ववा [? धी] ।
रागाच्छोभन(c 602)बुद्ध्या कि विरूपाया न वर्त्तन ।
तस्मादतत्त्वेपि नृणा तत्त्वबुद्ध्या प्रवर्त्तन ।
तस्य तस्योपदेश कि न (?)कृत्त्वा गजनिमीलन ।
अनेन तत्रानुष्ठानमविरोधीति साधितम् ।
तदभिप्रायसूत्रान्तकथितै का विरोधिता ।
अतत्त्ववित्प्रतीत्या च बाधने सिद्धसाधनम् ।
सर्व्वानालम्बनत्वस्य त प्रत्यनुपदेशनम् ।

---

* ibid मुद्रिते ग्रथे—तस्मात्सा ।
[१] श्लोकवार्तिके सम्यक् चेति पाठ ।
[२] श्लोकवार्तिकेभ्युपपत्तौ चेति पाठ ।
† श्लोकवार्तिके २३६ पृष्ठ ।

कृत्स्नसा[2]धनबुद्धिश्च तस्यानालम्बनाद्विना ।
यदा तु बोध्यते तत्त्व सर्व्वाभावेप्यदुष्टता ।
इष्ट एव तदाऽभाव सर्व्वस्यालम्बनात्मन ।
तत्साधनमनालम्ब ततस्तच्चेन्न सिध्यति ।
अविसम्वादिता तेन साध्यानालम्बनास्तिता ।
तस्य साधर्म्यदृष्टत्वात्तेनानेकान्तता कुत ।
तदन्यस्य प्रतिज्ञान सत्येव सूपगम्यते ।
तदन्यप्रत्ययस्यापि न मिथ्यात्वञ्च नेष्यते ।
तन्मिथ्यापूर्व्वको दोष कथमिष्टाप्रसिद्धित ।
तदन्यस्य प्रतिज्ञायामनवस्था न विद्यते ।
यत्र सत्या[3]भिमानोस्ति तदनालम्बन मत ( । )
निरालम्बनतान्यत्वसम्वादेपि निरूपिता ।
प्रतिसाधनमित्थञ्च कथ शक्यनिदर्शनम् ।
बाधकापेतबुद्धित्त्वमसिद्धमिति साधितम् ।
स्वप्नादिबाधधी सत्यानुपलम्भेन साधिता ।
तदुत्थितानुमानस्य बाधकत्त्वादसिद्धता ।
बाधकापेतबुद्धिश्च हेतो सालम्बसाधने ।
क्षणिकत्त्वादिबुद्धयायदनैकान्तिकचोदनम् ।
तदयुक्त यतो ज्ञान क्षणिक बाह्यवर्जित ।
(c. 60b) विज्ञानरूपक्षणिकत्त्वसिध्या साल(म्ब)नासौ क्षणिकत्त्वबुद्धि ।[4]
ततोऽनिरालम्बनता सबाह्या न सिध्यतीत्यर्थतया हि पक्ष ।

**बाह्यालम्बना· प्रत्यया न भवन्ति स्वप्नबुद्धिवत् । इति विशिष्य पक्षः कृत· । क्षणिकत्त्वादिबुद्धया नेकान्त इति चेत् । न, क्षणिकत्त्वं योगाचार दर्शने विज्ञानात्मभूतमेव साध्यं ततो विज्ञानात्मसालम्बनता दृष्टान्तेन तथा भूत सालम्बनतैव भेदवत् । अथ व्यतिरिक्तमालम्बनं तावत्सिद्धं । न व्यतिरिक्तालम्बना क्षणिकत्त्व बुद्धिः । तथा हि ।**

प्रत्यक्षमनुमानम्वा क्षणिकत्त्वादिवेदन[5] ( । )
नानुमान तदन्येन सालम्बनतया स्थित ।
अविसम्वादिता मात्रान्न सालम्बनता विदाम् ।।

**अविसम्वादो हि योनुमानेन स प्रत्ययान्तरेण व्यवहित· । ततः प्रत्ययान्तरं तथाभूतमुत्पादयदनुमान प्रमाणम् । न स्वाकारमात्रग्रहणात् । प्रत्ययान्तरञ्च**

**प्रत्यक्षमेव। साक्षात्करणे हि वस्तुग्रहणाभिमानः। तच्च साक्षात्करणं ज्ञान-रूपस्य क्षणिकस्य स्वरूप सम्वेदनेनैव न तदात्मभूतं तदन्यसम्वेदनेन ग्रहीतुं-शक्यम्। अथ स एव स्वसम्वेदनप[6]क्षो न सिध्यति प्रतिप्रमाणे सति।**

तद्रूपे वेद्यमाने हि यदान्यन्न प्रवेद्यते ।
तदा स्वरूपसम्वित्ति को वारयितुमर्हति ।
अवेदनेन वित्तिश्चेत्कि न सर्व्वेण वेदन ।
तथा न दृष्टमितिचेदन्यथापि किमीक्ष्यते ।
अर्थापत्ते (c. 61a) क्षयादेव यथा दृष्टन्तथेष्यता ।
आत्मानुभविता दृष्टस्तस्य दृष्टि कुतो मता ।
स्ववेदनेन चेदेतन्नीलादावपि नाधिकम् ।
आत्मनो द्रव्यता नैव साधिष्ठा यदि मीयते ।
नीलादेरपि नीलत्ववृत्तिर्वेदनतो न किम् ।

**यथैवात्मनो[7] द्रव्यरूपतान्या सम्वित्या वेद्यते तथा नीलादेरपि किन्नाभ्युप-गम्यते। नीलस्यापि स्वबोधरूपताऽन्या द्रव्यरूपतान्या भविष्यति। आत्मवत्स्व-बोधरूपा नीलादयोपि। अथोभयरूपता.** बौ द्ध **स्यासिद्धा** (।) सा मी मा स क-**स्याप्यसिद्धेः समानैव। न ह्येकमुभयरूपं नाममात्रकेण शक्यम्।**

एकरूपम्भवेदेकमिति मान प्रवर्त्तते ।
अनेकरूपमेकञ्चेत्सर्व्वमेक प्रसज्यते ।
वेद्यवेदकमेकञ्चेन्नीलादि न किमिष्यते ।
आत्मनी[8]ले भवेता हि तदैके वेद्यवेदके ।
भिन्नदेशतया नो चेत् भिन्नरूपतया न कि ।
रूपभेदेन भेदो हि प्रसिद्ध सार्व्वलौकिक ।
देशभेदन भेदो हि रूपाभेदे कथ भवेत् ।
तथा च सति देशादिभेद स्याद्व्यापिभेदक ।

**तस्मात्स्वसम्वेदनमन्तरेण वेदनमेव न सिध्यतीति सकलमनालम्बनमेव वेदनम्।**

बद्धमुक्तादिभेदोपि नैवास्ति परमार्थत ।
भेदो हि नावभात्येव सर्व्वत्र समदर्शिना ।
मोक्षादि[9]यत्नोपि न पारमार्थिकी स्थितिन्दधान क्वचिदस्ति लोके ।
वैयर्थ्यचिन्ता यदि तत्र युक्तिभाक् शशस्य शृगेपि न किम्विधेया ॥

**यथा स पारमार्थिको न भवति यत्नस्तथा भेदोपि** (c 61b) **बद्धमुक्ता-दिष्विति समानमेतत्। किञ्च।**

विकल्प्योत्पद्यमाना च बाह्यास्तित्वादिधीर्मृषा ।

बहिरादिविवेकस्तु नाविकल्पकसाधन ॥

**विकल्पयन्नेव बाह्यमान्तर साधारणमवासनानिमित्तादिक व्यवस्थापयति। अविकल्पकेन तु साक्षात्करण[10]रूपेण स्वरूपमेव प्रतीयते, न पररूपमिति पुरः प्रतिपादितमेतत् तत एतन्निराकृतम् ॥**

* विकल्पचोत्पद्यमाना च ज्ञानास्तित्वादिधीर्यदि ।

मृषेष्टा न च दृष्टात्र प्रमाणान्तरतो गति ।

प्रमाणाभावतस्तेन ज्ञानास्तित्वादि दुर्लभम्† ।

**निर्व्विकल्पक किल बहिरर्थरूपमेव। बोधोर्थापत्तिगम्यः। सा चार्थापत्तिर्व्विकल्परूपा** बौद्धस्य **च न विकल्पकं प्रमाणमिति ज्ञानाद्यस्तिता प्रमाणाभावादवशीर्येत** (।)

**तदसदेतत्॥[11] यतः ।**

अन्याभावे विकल्पस्य प्रामाण्य यदि युक्तिमत् ॥

विकल्पस्य प्रमाणत्वन्न युक्तमिति युक्तिमत् ॥

यदा तु न विकल्पस्य न चान्यस्य प्रमाणता ।

तदा विशीर्यमाणेपि सर्व्वस्मिन्कोपराध्यतु ॥

व्यवहारो न चेदेव सम्वृत्या केन वार्यते ।

**नन्वविकल्प एव सम्वृतिः सा चेद्व्यवहारनिमित्त ततः स एव परमार्थः, व्यवहाराविसम्वादात्।**

**तदप्ययुक्तम्।**

अविभावितरूपस्य प्रतिभासस्य सम्भवे ।

अविसम्वादिताख्यातिवासनासङ्गभाविना ।

कलधौ[12]तादिमानेन यदि कामलिनिद्वये ।

परस्पराविसम्वाद का तत्र परमार्थता ।

**एतत्तु वक्ष्यामः।**

सर्व्वञ्चाप्यस्मदादीना मिथ्याज्ञान विकल्पनात् ।

(c 62a) सान्निध्यविप्रकृष्टत्त्वे सत्वादि न च दुर्लभम् ॥‡

**इदं सन्निधानम्भगवतः। ततो देशनाधर्मस्य विपर्ययश्चैतयोः। इदं सदिदमसदिति**

---

* श्लोकवार्तिके।

† श्लोकवार्तिके सत्वा सत्वे च दुर्लभे इति पाठ.।

‡ श्लोकवार्तिके पृष्ठ २३७।

**किल दुर्ल्लभमसत्यत्वादेतत्साधकस्याविकल्पात्मनः। तदेतद्वासनाबलनियमादसदपि परमार्थतः सदेव.**

बौद्धदर्शन* एकस्मिन्[13] पक्षपातोपि युज्यते।
मृषात्वे च (हि) बुद्धीना बाधो नैवोपलभ्यते॥
वासनायास्तथा भावाद्बाधके सैव कारणम्।
भ्रान्तत्वस्य कथम्वित्तिरसति प्रतिवक्तरि।
प्रतिपादितमेतत्प्राक् न पुन पुनरुच्यते।

**यदि वासनाबलादेव परवशस्य प्राणिनो भवतः सत्यासत्यावभासौ। तौ च बाधितुमशक्यौ किमिदानीम्विवादेन वादिबोधनेन वा। यदि तस्य वासना प्रबोधाभिमुखी स्वयमे(व) प्रतिपत्स्यते। अथ न वच[14]नशतादपि।**

**तदसत्।**

वासनाया प्रबोधोय यथानेनाभवन्मम।
तथास्यापीति विज्ञाय वचन वर्त्तयेत्पर॥

**ततो यदुक्तं।**

मृषात्त्व यदि बुद्धेश्च बाध किन्नोपलभ्यते।
बाधाद्विनापि तच्चेत्स्याद्व्यवस्था† न प्रकल्पते
प्रतियोगिनि दृष्टे च जाग्रज्ज्ञाने मृषा भवेत्।
स्वप्नादिबुद्धिरस्माक तत्र भेदोपि किंकृत।
न चान्य प्रतियोग्यस्ति जाग्रज्ज्ञानस्य शोभन।
यद्दर्शनेन मिथ्यात्त्व स्तम्भादिप्रत्ययो व्रजेत्[15]।
स्वप्नादिप्रतियोगित्व सर्व्वलोकप्रसिद्धित।
(c 62b) तदीयधर्मवैधर्म्याद्बाधकप्रत्ययो यथा।†

**तदपि पराकृतम्। यद्यपि वासनाप्रबोध एव सर्व्वस्य भवन्नवबोधो व्यामोहो वा तथापि परावबोधाय वचन प्रवर्त्तयितव्यमेव। तथा हि स एव वासनाप्रबोधोऽनेन प्रकारेण मम जात आसीदन्यस्याप्येवमेव भविष्यतीत्यवबोधाय वचन** 10b
**प्रवृत्तिः। प्रतिनियतवासनाप्रबोधार्थ। तथाभूतवासनाप्र[16]बोधार्थितामवधार्य. ततो न व्यर्थता। ततो यदि बुद्धेर्मृषात्त्वं किन्न बाधोपलब्धिः। तथाभूतवासना-**

---

* श्लोकवार्तिके बौद्ध-दर्शन एकस्मिन्पक्षपातो न युज्यते इत्युक्तस्य खडनमिदम्।

† श्लोकवार्तिके पृ २३७—बाध, स्याद्व्यवस्था, प्रत्ययो—इति पाठान्तरेण।

**प्रबोधाभावात् । कथन्तर्हि मृषात्त्वपरिज्ञान वासनाप्रतिबद्धत्त्वज्ञानादेव । द्विविधं हि मृषार्थत्त्वमसदर्थत्व विसम्वादित्वञ्च । विसम्वादित्त्वं विपरीतवासनाप्रबोधतोऽविपर्यासवासनाप्रबोधतश्च सम्वादित्त्वमिति ।**

**ननु सम्वादश्चेदस्ति कथमसदर्थत्त्व । अविसम्वादाकारस्यापि वासनाप्रतिबद्धत्वात् । न विसम्वादिप्रतिभासे[1]प्यर्थान्वयव्यतिरेकानुविधानमस्ति । एतदेवासदर्थत्वं (।) तत स्वप्नादिप्रत्ययसमानत्वादसम[? सद]र्थता । नहिबाधकप्रत्ययात्स्वप्नादिप्रत्ययानामसदर्थता, येन तदभावात् जाग्रत्प्रत्ययसमत्त्व भवेत् ।**

वासनाप्रतिबद्धत्त्वे कथमेतद्विभज्यते ।
इद सम्वादि न पर नैकत्रास्ति विरुद्धता ।

**तदसत् ।**

वासनाप्रतिबधेपि यथा नीलादिभेदिता ।
स्वप्नादिष्वसयोगश्च सम्वादादि तथा न किम् ।।
यत्समान कथञ्चित्कि सर्वथा[2] तत्समानता ।
(c 63a) मनुष्यत्त्वे समानो(ने)*पि ब्राह्मणेतरता कथम् ।
यथार्थप्रतिबद्धत्त्वे सर्व्वासम्वादभाङ न वित् ।
तथा विपर्ययेप्येतत्किमकस्मादसम्भवि ।।
वासना प्रतिबद्धोर्थविदा नास्त्येव सर्व्वथा ।
अर्थप्रतिविवेशो हि सर्व्वासामेव दृश्यते ।।

**तदसत् ।**

यथासौ दृश्यतेर्थार्थी तथैव यदि विद्यते ।
प्राप्तिरस्तु सदार्थाना बाधक प्रत्यय कथम् ।।
अलौकिकत्त्वादुभयात्मयोगात्स्मृतिप्रमोदा(षा)द्विपरीतवित्ते ।
सबाधकत्त्व[3] न तथार्थसत्त्व तत स सम्वादतया न योग ।।

**अलौकिकोसावर्थसत्यादप्रत्ययाद्यगोचरत्वात् । अथवा तस्य सत्त्वस्यासत्त्वञ्च । ततो दृश्यतेपि बाध्यतेपि । अथवा स्मर्यमाणोऽसमर्थो देशान्तरस्थः प्रत्यक्षतया प्रतिभाति न तत्रस्थ एव । ततोऽप्राप्तिस्तत्र (।) एवं विपरीतख्यातावपि योजनीयम् । तदेतदप्रमाणवृत्तम् ।**

नादृष्टपूर्व्वसर्प्पस्य रज्वा सर्प्पमति क्वचित् ।
पूर्वदृष्टचनुसारित्वान्न हेतुर्वासना कथम् ।।

**पूर्व्वदर्शनमन्तरेण हि न भवति रज्ज्वां सर्प्पबुद्धिः । पूर्व्वदर्शनादिदम्वेदनमत्रार्थो नास्तीति सकललोकनिश्चयः । अन्यथा सकलकार्यकारणभावोच्छेद**

---

* श्लोकवार्तिके पृ० २३८ ।

**एव। प्रतिभासमात्रेणास[?श]क्यग्रहणात्। प्रतिभासमात्रे हि स्वसम्वेदनमेव केवलं हेतुरहितमिति प्रतिपादितं। तस्मात्तन्निश्चयादेव कार्यकारणभावः। नात्र विपरीतादिख्यातियोगप्रतीतिः।** (c. 63b) **अथापि स्यादेषापि विपरीतादिख्यातिरेव नात्रार्थो वि[5]द्यत इति।**

विपरीतादिवित्तिश्चेत्पूर्व्वविद्धेतुता भवेत्।
प्रतीतिरथापि ततस्तथैवेति प्रतीयताम्।
अर्थस्य प्राप्तिरन्यत्र ततो नालौकिकादिता।
सर्व्वत्रार्थस्य न प्राप्तिरिति पूर्व्वं प्रसाधितम्।
निश्चयादर्थ इत्येवं नेति चेत्तन्न सङ्गतम्।
निश्चयोऽलौकिकाद्येपि बाह्योर्थ इति किन्न सः।
अर्थेप्यनर्थ इति तु निश्चयस्याप्रवृत्तितः।
अनर्थनिश्चयस्यास्य तेनानैकान्तितास्ति न।
वासनामूलताज्ञानमर्थता[6] स न बाधनम्।
तेन जाग्रद्धियो नास्ति प्रतियोगित्त्वसम्भवः।
पूर्व्वदर्शनतो ज्ञानं तदप्यस्तु तदन्यतः।
अनादिवासनासङ्गजनितं सर्व्ववेदनम्।
निरालम्बनवादोयमत एव विराजते।

**अत एवेदमपि निरस्तम्।**

(*योगिप्रत्यक्षम्*—)

"योगिनां जायते बुद्धिः बाधिका प्रतियोगिनी।
जाग्रत्स्तम्भादिबुद्धीनां ततः स्वप्नादिकल्पना[1] ॥
प्राप्तानान्तामवस्थाञ्च सर्व्वप्राणभृतामपि।
बाधोयम्भविता तेन सिद्धा सप्रतियोगिता[7]*"

**अवश्यं हि प्रमाणपरिशुद्धार्थभावनाबलात् योगिनां प्रमाणभूतप्रत्यक्षं ज्ञानमुदेति. विपर्य्ययबाधकम्। तेन (—)**

"इह जन्मनि केषाञ्चिन्न तावदुपलभ्यते ॥
तामवस्थां[2]गतानान्तु न विद्मः किम्भविष्यती" † (॥)

---

*श्लोकवार्तिके पृ० २३८। † ibid तत्रैव।

[1] श्लोकवार्तिके स्वप्नादि तुल्यतेति पाठः।

[2] श्लोकवार्तिके योग्यवस्थामिति पाठः।

**(—)ति निरस्तम्। यतो विदितमेव भावनायाः सामर्थ्यम्। ततोऽवश्यमेव स प्रत्ययो भावीति कस्मान्न विद्मः। तत इदमत्यन्तासम्बद्धमेव। यदुच्यते—**

"योगिना चास्मदीयाना त्वदुक्तप्रतियोगिनी ।
(c 64a) त्वदुक्त[8]विपरीता वा बाधबुद्धिर्भविष्यती † (।।)"

**(—)ति ।। यत ।**

अप्रमाणबलायातभावनाबलभाविनी ।
येषा ते योगिनो बुद्धि किन्न शोकादिविप्लुता ।
ईदृक्[1]त्वे योगिबुद्धीना दृष्टान्तोस्तीति साधितम् ।
दृष्टान्तो युष्मदीयाना न कश्चिदपिविद्यते ।
तत( )स्तम्भादिबुद्धीना भवेत्सप्रतियोगिता ।
बाध्यत्व वापि बुद्धित्वान्मृगतृष्णादिबुद्धिवत् ।

**उक्त**

इष्ट सप्रतियोगित्वं मृगतृष्णादिबुद्धिभि —
तदात्मना च बाध्यत्व ग्राह्यान्तरतयापि चेत् ।।
जात्युत्त[9]रमिद प्राह नैव बाधकता स्थिति ।।
वाधकत्वविवक्षा हि निर्मूलोच्छेदकारिणी ।
यथाकथञ्चिद्वदतस्तदेतज्जात्डचजृम्भित ।

**नहि प्रतियोगित्वमात्रं विवक्षितमपि तु बाधकप्रतियोगित्व। तेन प्रतियोगित्वमात्रं साधनमसम्बद्धत्त्वं।**

बाध[2]कैश्चाप्यनैकान्तेस्तदन्यत्वञ्च पूर्व्ववत् ।
बुद्धादिप्रत्ययान्यत्वसाधकप्रत्ययो मृषा ।
अत्राप्यन्तर[? प्युत्तर]मस्माभि पूर्व्वमेव निरूपित ।
बुद्धादिप्रत्यय सर्व्वं स्वाङ्गमात्रावलम्ब[10]न ।।
व्यवहारप्रसिद्धिस्तु यथा तदभिधास्यते ।
मिथ्याधीप्रतियोगित्त्व स्वप्नादाविव ते भवेत् ।
इति पूर्व्वमेव विहित नोत्तर पुनरुच्यते ।

**तथाहि।**

---

† श्लोकवार्तिके पृ० २३८ ।

[1] ईदृक्त्वे इत्यादि ग्राह्यन्तर तयापि चेत्यन्त श्लोकवार्तिको (पृष्ठ २४० श्लोक ९५—९८) आनुवादेन सह निराकरणपरम्।

[2] वाधकैश्चापीति, मिथ्याधीप्रतियोगित्वमित्यर्थद्वय श्लोकवार्तिको (पृ० २४० श्लो० ९९) क्त अनूभेद खाण्डेतम्।

मिथ्यात्त्वे सर्व्वबुद्धीना तारतम्यादिभावत ।
बाध्यबाधकभावोय वासनातारतम्यत ।
यथा मिथ्यात्त्वभावेपि वाह्यभावानुरोधत ।
बाध्यबाधकभावोय भवतामविगानत ।

तत्र(T. 64b)**विपरीतादिख्यातित्वादसौ। इहापि वासनादार्ढ्यभावाभावाभ्यां**[11] **बाध्यबाधकभाव इति न दोषः।**

**ननु बुद्धस्य भगवतो बुद्धिर्योगित्त्वरागादिक्षयनिमित्तवती तस्य च विशेष्यबाधनाद्विरुद्धः। तथा हि।**

रागादिक्षययोनित्त्वनिमित्तादिगतस्तथा ।
यावान्विशेषदृष्ट स्यात्सर्व्वबाधाद्विरुद्धता ।।*

**स्तम्भादिप्रत्ययबाधके बुद्धादिज्ञाने यावन्तो विशेषा रागादिक्षयनिमित्तत्वादयस्तेषा बाधनाद्विरुद्धतापि हेतोर्भवेत्। तथा हि मिथ्याधीप्रतियोगित्त्वं यदैव स्व**[12]**प्नादिज्ञानानां साधितं। तदा ताथागतमपि ज्ञानं प्रतियोगित्त्वान्मिथ्याप्रसक्तम्। स्वप्नबाधकस्तम्भादिज्ञानवदेव। अत्रोच्यते।**

यदि विशेषविरुद्धतया क्षतिर्नन् न हेतुरिहास्ति तदुत्थितः ।
निखिलहेतुपराक्रमरोधिनी न हि न सा सकलेन विरुद्धता ।

**यथा स्वप्नबुद्धिर्मिथ्यास्तम्भादिबुद्धिप्रतियोगिनीति साध्यते। तथा प्रतियोगिबुद्धिप्रतियोगित्त्वमपि बुद्धित्वात्स्वप्नबुद्धिवदेव। एवं यथा धूमो**[13]**ग्नि साधयति। तथा इहेदानीमग्न्यसम्भवमपि साधयतीति न हेतुरेव कश्चित्साध्यसाधनः स्यात् (।) किं च। बुद्धित्वात्प्रतियोगित्वमात्रमेव साधयति। न विशेषप्रतियोगित्वं** (c. 65a) **। तथा यथा कृतकस्त्वमनित्यत्त्व साधयति शब्दस्य तथाकाशगुणत्त्वविपर्ययमपि साधयतीति प्राप्तं। न चाकाशगुणत्त्वमपि शास्त्राङगीकरणात्साध्यम्। इष्ट साध्य इति वक्ष्यते। तस्मान्न विशेषविरुद्धता हेतुदूषणम्।** 11a

**ननु(——)**

महा[14] जनस्य चाबाधादिदानीन्तनबुद्धिवत् ।
वाच्योऽनुमानबाधो वा यदि वा प्रतिसाधनम् ।†

**महाजनबाध्यबुद्ध्यभावादिदानीन्तनबाधकबुद्धिवत् स्तम्भादिबुद्धिः सत्या**

---

* श्लोकवार्तिके (पृ० २४०) क्षययोगित्व—निमित्ताधिगति—विशेष इष्टश्चेत्—सर्वाभावात् इति पाठभेदेन्।

† श्लोकवार्तिके (पृष्ठ २४०) दिदानी वाध बुद्धि वदिति पाठान्तरेण।

**विवादास्पदीभूतस्तम्भादिबुद्धिरबाध्या. तद्विषयत्त्वेन महाजनस्य बाधकबुद्धा(ध्य)-नुत्पादात्स्वप्नादिबाधकबुद्धिवत् ।**

**तदप्रतिरूप । तथाहि ।**

प्रतिबन्धविनाभूता दृष्टिमात्रप्रसाधनात् ।

इष्टा स्यात्साध्यसिद्धिश्चेत् तदे द [?व] युक्तमुत्तरम् ।

**न च स्वप्न[15]बाधबुद्धिरबाध्या परमार्थतः । प्रत्यक्षस्यैव बाधकस्य दर्श-नात्संवृत्या त्वबाध्यत्त्वं स्तम्भादिबुद्धेरपि न काचिन्नः क्षति ।**

असत्यया तर्हि कथम्बाध स्वप्नादिवद्धिया ।

तारतम्यस्य सद्भावादिति पूर्व्वन्निवेदितम् ।

**किञ्च ।**

जाग्रद्बुद्धिर्न सत्यत्त्वाद्बाधते स्वप्नदर्शन ।

तत् ज्ञेयानुपलब्धित्वात्तच्चासत्यस्य नास्ति किम् ।

**प्रतिपादितमेतत् (—)न बाधको नाम स्वाननसत्यतया बाधकोऽपि तु तदनु-पलब्धितः (c 65b) । सा चानुपलब्धि[1]रूपता विपर्ययोपलब्धिरूपतयैव । सा च स्वांगसम्वेदनत्वेपि न परिहीयते । तथाहि ।**

मेयान्तर स्वरूप वा लब्धो सौ तद्विपर्यय ।

ततो जाग्रद्धिया बाध्या स्वागेपि स्थितया परा ।

**नन्वियमपि यदि भ्रान्तिः तदा किमवष्टम्भादसौ बाध्या स्वप्नबुद्धि ।**

**तदप्यसत् । (—)**

निर्वृत्ते साधनार्थे स्यात्स्वप्नदृष्टिसमानता ।

बाध्यबाधकभावेन तदा किन्न प्रयोजन ।

**नन्वपरमुच्यते ।**

पूर्व्वसा[2]धनदोषाश्च सन्धेयास्तस्य चाधुना ।

साध्यभेदादबाध्यात्वाद्धेतोर्न्नोभयसिद्धता ॥*

**बोधनं बुध्यति बुध्यते वानेनेति विकल्पाः । तत्र च पूर्व्ववद्दोषाः साध्याभेदेन प्रतिज्ञार्थैकदेशत्त्वेनाबाध्यत्वात्प्रत्ययत्त्वस्य हेतोर्न्नोभयसिद्धता ॥**

**ननु प्रत्ययविशेषो धर्मी सामान्य साधनमिति न प्रतिज्ञार्थैकदेशता ।**

**तदाह ।**

सामान्य प्रत्ययत्त्वञ्च भिन्नाभिन्नन्न विद्यते ।[3]

---

* श्लोकवार्तिके (पृ० २४१) साध्याभेदाद वाच्यत्वादिति पाठान्तरेण ।

भवतोत्यन्तभिन्नञ्च प्रत्यक्षेपि[१] न किञ्चन ।
सारूप्या[२]द्यनिवृत्तौ च नेत्येतद् गमयिष्यते ।
तस्मान्न हेतु सामान्यमस्ति सिद्ध द्वयोरपि ॥*

**न युक्तमेतद्यत**·।(—)

सामान्य प्रत्ययत्वञ्च भिन्नाभिन्न मत हि न ।
व्यावृत्त्या समभावस्तु तया नेतीति वेद्यते ॥

**तत एव परा सर्व्वगयोगात्प्रत्ययः प्रत्यय इत्यर्थस्य हेतुता पारम्पर्येण वस्तु सम्बन्धात् ॥ प्रत्यय** (c 66a) **इति कोर्थ**·[4] **सम्वेदनमात्मरूपसम्वित्तिमात्रं। ततोऽसिद्धमेतद्**(—)

विशेषयोश्च हेतुत्व पक्षतत्तुल्यसस्थयो ।
तस्या [? नस्या]दन्वयहीनत्वादतद्धर्मतयापि चे (,॥)*

**—दिति था** (वा,) **न च**(—)

न चार्थहीना तद्बुद्धिर्हेतुत्वेन भविष्यति ।
आश्रयासिद्धता चोक्ता विशेष्यस्याप्रसिद्धित ।
तथा हेतोर्व्विरुद्धत्व दृष्टान्ते साध्यहीनता ।
विशेषणाप्रसिद्धयर्थविकल्पेनैव बोधिता ।*

**सर्व्वमेतत्प्रागेव**[5] **परिकृत । तस्मादसदेतत् । तत एतदनवद्यं** सर्व्वे प्रत्यया निराल(म्ब)ना प्रत्ययत्वात्स्वप्नप्रत्ययवत् । **तेन निरालम्बनत्वं सर्व्वप्रत्ययाना ॥**

तदन्यसम्विदो(ऽ)भावात्स्वसम्वित्फलमिष्यते ॥ (३३०)

**स्वसम्वेदनमेव फलं। विज्ञान स्वमुदयत्स्वरूपमेवावभासयति नार्थम्। अर्थ-प्रतिपादने तस्य सामर्थ्याभावात्। अदर्शनाच्चार्थप्रतिपादनस्य। अत्रोच्यते।**

यदि बाह्योनुभूयेत को [6]दोषो नैव कश्चन ।
इदमेव किमुक्तं स्यात्स बाह्योर्थोनुभूयते ॥ (३३१)

**किमनया सूक्ष्मेक्षिकया बाहयन्नानुभूयत एव । अस्य प्रयासस्य कि फलं । यथा लोकव्यवहारतया[? रस्तथा]स्तु. न चानालम्बनत्त्वप्रतिपादनेऽन्यथा**

---

[१] श्लोकवार्तिके मन्यक्षे पीति पाठ ।

[२] श्लोकवार्तिके साधुप्यान्यनिवृत्ति च नेत्येतत्साधयिष्यते इति पाठान्तरेण ।

* श्लोकवार्तिके पृष्ठ २४१—२४२ ।

व्यवहारो न च व्यवहारादपरमिह फलमस्ति।

तदप्यसदेव।

यदि व्यवहृति साध्या व्यवहारो यथा तथा।
वेदस्यापौरुषेयत्वे प्रयास किंफलस्तव।

न खलु[7] यदनादिव्यवहारोर्थकृतः। पौरुषेयत्वेतरतया सिद्धो येन (c 66 b) तदभावेन तद् भवेत्। अथ स एव विचार्य क्रियमाण सदर्थः। तथा सति विचार्यतामपरमपि। अथ पौरुषेयत्वे प्रामाण्यमेव न स्यादेतदपरस्यापि समानम्। अपौरुषेयत्वेपि प्रामाण्याभावात्। किञ्च।

यदा बाह्यग्रहाभावस्तदा रागादि हीयते।
भावनाबलतो वृत्तेस्तदभावे विपर्ययात्[8] (॥)

तत्त्वनिरूपणे हि रागादिदोषक्षयः। स च पर पुरुषार्थ इति प्रतिपादितं। ततस्तत्त्वं निरूप्यते। बाह्यार्थस्यानुभवो नास्ति। तथा हि। बाह्याऽर्थोनुभूयत इति कोर्थः। किमनुभूतिप्रवेशसद्भावादनुभूयत इति व्यपदेशोर्थाप्रवेशनादेव। तत इदमाह।

यदि बुद्धिस्तदाकारा सास्त्याकारनिवेशिनी।
सा बाह्यादयन्तो वेति विचारमिदमर्हति॥ (३३२)

तदा[9]कारा बुद्धिरिति कोर्थः। नीलाद्याकारा। नन्विदमिदानीम्विचार्यते। तदाकारेति कुत.। ततस्तदाकारा बुद्धिरिति परिज्ञानार्थं स पुनर्द्रष्टव्य.। तत्रापि दर्शने तदाकारतैवेत्यनवस्था। अथ निराकारेण दृश्यते। तदा तदेव दर्शन किमाकारपरिकल्पनेन। अथ तदाकारेति तन्निरूपणाकारात्तद्दर्शनाकारेति। तदा तदेवोच्यते। तन्निरूपणन्तद्दर्शनमिति कोर्थ[10]:। अथ द्वयमपि दृश्यते। तथा सति स्वरूपेण द्वयं दृश्यते। ततः परस्परं ग्रहणं न वा कस्यचिदिति स्वसम्वेदनमेव द्वयमिति प्रतिपादितं। (c 67a) अथ बाह्यं विनाऽयमेव न भवति। एवन्तर्हि बुद्धिं विना ऽपरोक्षता न भवतीति प्राप्तम्। अथ दृश्यत एवापरोक्षता (।) तथा सति परं परिकल्पनीयं (—) तदाकारा बुद्धिरपि दृश्यत एव किमपरपरिकल्प.। यतः।

द[11]र्शनोपाधिरहितस्याग्रहणात्तद्ग्रहे ग्रहात्।
दर्शनं नीलनिर्भासं नार्थो बाह्योस्ति केवल (:)॥ (३३३)

यदेव दृश्यते तदेवाभ्युपगम्यते। तथा हि प्रतिभासात्तद्गतमेव नीलमवभासते नापरं। ततः प्रतिभासव्यतिरेकेण न प्रमाण। ततो नाभ्युपगमः। अथ प्रतिभासात्तद्गतन्तन्न प्रतिभासते प्रतिभासस्यान्तरत्वान्नीलादेश्च बहिरवभासनात्।[12] न व्यतिरिक्तस्य भावे तस्य प्रतिभासनं स्वरूपेणापरोक्षेण तस्य प्रतिभासनात्। तथा हि।

व्यतिरिक्तस्य सद्भावे न नीलस्यापरोक्षता ।
स्वरूपेणापरोक्षत्त्वान्न तस्यान्याऽपरोक्षता ॥

यथैव हि ग्राहकाकारः स्वरूपेणापरोक्षो न ग्राहकान्तरभावात्तथा तेन समनाकालोपि नीलादिकः। यथा च चक्षुरादिकाद् ग्राहकाकारः[13] तथा तत्समानाकारोपि, तदन्वयव्यतिरेकलक्षणत्वात्कार्यकारणभावस्य । न पूर्व्वापरसद्भावो ऽन्धस्य प्रमाणतोऽवसीयते। प्रत्यक्षस्य पूर्व्वापरयोरप्रवृत्तेः। अथ पूर्व्वमप्यसौ नास्तीति कथ प्रतीयते। पश्चाद्वा ग्राहकाकारोपि कस्मान्न पूर्व्वं परिकल्प्यते बुद्धिर्व्वा सुखादयो वा । अथ (c 67b) नित्यत्त्वादात्मन एवमेवेति चेत् ।[14] अपरोक्षतापि तर्हि प्रागेवास्तीति कि न परिकल्प्यते । विरोधादिति चेत् । न ह्यप्रतीयमानाऽपरोक्षता युक्ता । अर्थस्तद्व्यतिरिक्तोऽप्रतीयमानोपि युक्त. । व्यतिरिक्त इति केन प्रतिपन्नं । अत एव कदाचिद् भवेदिति सन्देहचोदना । अपरोक्षतापि कस्मान्नैवमिति चेत् । अपरोक्षत्वप्रसङ्गात् । नान्यस्याप[15]रोक्षत्वात् (इ) यमपरोक्षेति कल्पना स्यात् । शुक्लतादिवत् । शुक्लता यद्यपि एकस्य 11b
घटादेर्न भवति द्रव्यान्तरस्य भवत्येव । ततोऽपरोक्षताव्यतिरेकेण नापरो नीलादि· ।

ननु यदा पदार्थस्य शुक्लतापैति किमसावन्यत्र गच्छति । ना (न । अ) परोक्षतापि नापरगतान्यत्र गन्त्री। एवन्तर्हि तदव्यतिरेकादर्थस्यापि तदभावादभावः। अव्यतिरेक एव न निश्चित इति चेत्। अग्नेरपि तर्ह्यभावेऽग्निरूपाभावो न सिद्ध एव । तद्व्यतिरेकेणाग्नेरभावादि[1]ति चेत् । नाव्यतिरेकस्यासिद्धत्वात् । तद्व्यतिरेकेणादर्शनादिति समान सर्व्वं। तस्मादसदेवापरोक्षताव्यतिरिक्तम्। अनुमानमपि नापरोक्षताव्यतिरेकं साधयति। यदा परोक्षावस्थायामपि साधयति ततो नीलमास्त एव यत्पश्चात्प्रतिपत्स्ये। न तत्र पूर्व्वरूपानुसारेण प्रतिपत्तिभावात्। स्मरणन्तदनुभवानुसारि स चानुभवोऽपरोक्षरूपस्यैव । न च पृ[2]थग(c 68a) परोक्षरूपतामवस्थाप्य नीलादिःस्मरणविषयः। इह कथं प्रतिपत्तिरिति चेत्। नेहापि तथा भूतमेवाध्यारोप्यते । यदि पूर्व्विकामपरोक्षरूपतां परित्यजति। नीलरूपतामपि तदव्यतिरेकात्परित्यजेदेव नहि विभागेन स्मरणम्। स्मरणमनुमानं न भवत्यधिकस्य प्रतिपत्तेरिति चेत्। नाधिकस्य प्रतिपत्तौ कारणाभावात्। कथन्तदधिकस्य प्रतिपत्तिरिति चेत्। नाभावात्। कथं प्रमाणम् ।[3] प्रथममेव व्याप्तिसिद्धेः। यदा धूममग्नेरुदयमासादयन्तं पश्यति परापरदेशाग्निसम्बन्धेन। तदैवमस्य प्रतिपत्तिः । यत्र यत्रायमुपनीयते तत्र धूमं जनयति। नैकदेशोऽन्यदेशसम्बद्ध । ततो यद्यन्यत्रापि भवत्यग्निस्तत्रापि जनयत्येव। तेन धूमदेशोऽग्नेः प्रतिपन्न एव। स च भावी धूमोऽग्नेर्व्वा तद्रूप एवाध्यारोप्यते नान्यथा शक्यत्वात्। ततोऽधिकधूमदर्शनादधिकपावकप्रति[4]पत्तिः। यस्य तर्हि

पूर्व्वकं पावकविषयमध्यारोपं विनैव स[?झ]टिति धूमदर्शनात्प्रतिपत्तिस्तस्य कथम्। तस्यापि सामान्यप्रतिबन्धमन्तरेणाप्रतिपत्तेः। तथा हि(—)यदि नाम झटिति प्रतिपत्तिस्तथापि यदानुयुज्यते। यदि नामोत धूमः कस्मादग्नि.। एवमेव दृष्टत्वादिति। तेन वक्तव्य(—)तच्च दर्शन न परमार्थतोऽपि तु(c 68b) दर्शनाध्यारोपयोरेकत्वाद्व्यवसायात्। न च दृश्यमानादिनाव्यतिरे[5]केण विकल्पेत दर्शनादर्थी न प्रवर्त्तेत। दर्शनार्थिनो नोपदिशेत्। नहि दृश्यमानतामप्रतियन् दर्शनार्थी भवति। योस्ति स प्रतीयत इति चेत्। यदि दर्शनेन सम्बन्धो न गृहीत. कथमस्तित्वमात्रप्रतिपत्ते. प्रवर्त्तकः। तस्माद् दृश्यमानतामेव प्रतिपद्यमानः तदर्थी नान्यथा। नहि नीलादितामनवगच्छँस्तदर्थी दृष्टः। तस्मादनुमानमन्यद्वा विकल्पकं विज्ञानं दृश्यमानताव्यतिरेकेण[6] न नीलादितामवगच्छति। कथन्तर्हि परोक्ष-विषयमनुमानं। पूर्व्वस्यापरोक्षत्वस्याध्यारोपात्। कथमतस्तत्राग्निरिति प्रतिपत्ति·। अध्यारोपस्य तथाभावात्पूर्व्वदृष्टमरीचिकाविषयजलवत्। यत्राध्यारोप्यते स परो वह्नेरिति चेत्। न(।) तस्य स्वरूपेणाप्रतिपत्ते.। तदेव तस्य रूपमिति चेत्। अपरोक्षमेव तदिति कथम्परोक्षता। स्वरूपप्रतिपत्तिरेव हि परोक्षता[7] परेण प्रतिपत्ति रिति चेत्। सैवापरोक्षतेत्यपरिहारः। परेण प्रतिपत्तिरिति च प्रतिबन्धबलादध्यारोप एव। ततः परप्रतिपत्तिरिति मिथ्या। बाह्यस्य परोक्षस्य प्रतिपत्तिर्युक्तापि तस्य स्वयमपि पश्चाद्दर्शनादेकत्त्वाध्यारोपादिवन्तत्परोक्षमासीदिति परप्रतिपत्तौ चेत्तदपि नास्ति. इयं सा परप्रतिपत्तिः। प्रागासीत्परोक्षेति। (c 69a) तस्माद-सत्परो[8]क्ष नाम। तस्माद्दर्शनो गा(?) विरहितस्याग्रहणमेव। कथं व्यतिरेक-गतिरर्थस्य। यदि नार्थोस्ति सम्वेदनव्यतिरिक्तः कुतो नीलपीतादिप्रतिभास-भेदः। चक्षुरादिकादेव केशप्रतिभासवत्। ननूपघातबलात्केशादिप्रतिभासनं। उपघात इति कुत.। केशादिप्रतिभासनादिति चेत्। नीलादिप्रतिभासनादिति प्रकल्प्यताम्। नन्वेकरूपता स्यात्केशादिवदेव नानादे[9]शेपि न नानानीलादिता यथा भ्रमति चक्षुषि भ्रमति तथा किम् नीलादिक। यदि च चक्षुर्विज्ञानकारण-मिष्यते। बाह्य तत· किन्न नीलादिकम्। यथा रूपग्रहणे चक्षुः कारणम्। तथाऽ-वान्तरग्रहणे तत पर। ततो बाह्यार्थसिद्धि। सम्वित्प्रतिनियमादिति।

अत्रोच्यते।(—)

कस्यचित्किञ्चिदेवान्तर्व्वासनाया. प्रबोधकं।
ततो धियाम्विनियमो न बाह्यार्थव्यपेक्षया॥ (३३४)

उक्तमे(व)न्न बाह्या[10]र्थः सिध्यति प्रत्यक्षत.। कार्यव्यतिरिक्त (त)त्कल्प्यते। कार्यव्यतिरेके च वर चक्षुरेव कल्पितं। अर्थान्तरकल्पनातो वरं दृष्टमेव

चक्षुरादिक तद्विशिष्टमिति कल्पना। तदपि परोपरोधादुच्यते। वर समनन्तर-प्रत्ययस्यैव विशेषकल्पना। शरीरमपि कारणञ्चेत्। न। शरीरप्रतिभासव्यति-रेकेण तस्याभावात्। तत्प्रतिभासे सतीति चेत्। तथापि विज्ञानादेव (c 69b) विज्ञानं समानकाल[11] ता च शरीरप्रतिभासेन इत्यादि प्रतिभासस्येति न कारणता। तथा हि।

यथा रो(रा)गादिकल्पाना कालादिनियम स्फुट ।
प्रबोधकस्य नियमाद्विना वा तत्प्रबोधकै ।
तथा नीलादिनियतप्रतिभाससमागम ।

रागादयो हि प्रतिनियतदेशकालावस्थाभाविनः प्रबोधकप्रत्ययवशात्। न तु तेषामालम्बननियमो व्यभिचारात् । कथमनादिचिन्ताप्रतिभासानाञ्च नियमः प्रबोध[12] के सत्यन्यथा च। न च बाह्यस्यैव प्रबोधकत्व चिन्ताप्रतिभासेनापि चिन्तान्तरवासना प्रबोधात्। असामर्थ्येन यथाभोगसम्भवे। न ह्याभोगस्य क्वचित्पक्षपात.। आभोगसमानत्त्वेपि कस्यचित् पटरूपस्य प्रतिभासादभ्यासादितो वा स्वप्नादिप्रत्ययाना च क. प्रतिनियमहेतु । तदा जन्मान्तरादिदृष्ट बाह्यमेव नियम-हेतुरिति चेत्। न। सर्व्वस्य दृष्टत्वात्तत्काले चाभावा[13] त्तत्कालनियमे को हेतुः।

देशादिनियत बाह्य प्रतिभासनियामक ।
यदि तद्देशबाह्यस्याभावे न नियम कु ।

यदि तत्र बाह्योऽर्थो न स्यात् तदा वा तत्कालदेशनियतप्रतिभासः कुतः अथ तत्कालतादिकमन्तरेणापि नियमः पूर्व्वार्थदर्शनात्। किमिदानीमर्थेन पूर्व्व-प्रतिभासादेव नियमसम्भवात्। तथा हि।

अर्थशून्योऽवभासो हि माभूदित्यर्थकल्पना ।
पूर्व्वार्थादेव नि [14]यमे प्रतिभासेन कि कृतम् ॥

इदानीमत्रार्थमन्तरेण न प्रतिभासनन्तस्य युक्तम्। प्रतिभासनस्य पूर्व्वमेव विरुद्धत्त्वात् न तत्प्रतिभासः (c 70a)। न ह्यविद्यमान इहेदानी प्रतिभासत इति बाह्यार्थ कल्प्यते। यदि त्वविद्यमानोप्यर्थ. पूर्व्वदेशकालदृष्ट इह प्रतिभाति। प्रतिभास एव पूर्व्वकालादिः प्रतिभासता किमर्थकल्पनया। बाह्यार्थवादिभिरपि प्रतिभासस्याभ्युपगमात्। तथा तत्र बा[15]ह्यार्थ एव प्रतिभातीह त्वयोगान्न प्रतिभास इति चेत्। तत्र योग इति कुतः। सम्वादादिति चेत्। ननु सम्वादोप्यपरसम्वादात्किन्न युक्तः। तत. सम्वादादपरः सम्वाद इति सम्वादप्रतिभासपरम्परैव युक्ता।

ननु यो हि जनित्वा प्रध्वसते स मिथ्याप्रत्ययो यथा नेदं रजतमिति। अयन्तु स्तम्भादिः स्वपरिनिश्चित. कथम्विपर्यस्तः।

तदसत्।

वासनाया दृढत्वेन प्रध्वसो नास्त्य [16]नन्तरम् ।
यथा रागादिकल्पाना वासनाबलभाविनाम् ॥ 122a

वासनाबलाबलार्थेन एव रागादिविकल्प'। तथा याह्यरहित.। तथाप्यसौ न नष्टलोचनेपि झटिति विघटते। तथा स्वप्नव्याख्याप्रबन्ध. कथ चिदपि न विघटते। वासना दाढ्यतः। तथाहि (---) स एव पूर्वपाठक उत्थायोत्थाय पुन पुन स्वप्ने व्याख्यायते। तस्मान्न बाह्यार्थव्यपेक्षो नियमः। तथाहि।

स्वप्नदृष्टन्त्वय किञ्चिज्जाग्रतो नानुवर्तते ।
अवस्था तादृशी तस्य[1] बालकस्येव मूत्रणम् ॥

बालकस्य मूत्रावस्था स्वप्नदृष्टा जाग्रदवस्थायामप्यनुवर्त्तिनी न तरुणाद्यवस्थाया। प्रतिपादितश्चार्थक्रियाव्यभिचार (c 70b)प्रागिति न पुन. प्रपञ्चः॥

तस्माद्द्विरूपमस्त्येकं यदेवमनुभूयते।
स्मर्यते चोभयाकारस्यास्य सम्वेदन फल ॥ (३३५)

द्विरूपमिति बोधाकार नीलाकारञ्च व्यतिरेकस्यावेदनादेक। अपोद्धा(?)-रपरिकल्पनया द्विरूप। कुत एतत्। यस्मादेवमनु(भू)यते[2]स्मर्यते च। तत उभयाकारादपरस्य सम्वेदनस्याभावादर्थस्य सम्वेदनं। फलमित्युपसंहारः। नन्वर्थसम्वेदनतया प्रतीयते कथ स्वसम्वेदनं।

अत्रोच्यते।

यदा निष्पन्नतद्भाव इष्टोनिष्टोपि वापरः।
विज्ञप्तिहेतुर्विषयस्तस्याश्चानुभवस्तथा ॥ (३३६)

तदा हेतोर्न्निष्पन्नतद्भावस्याऽभावादनुभवस्यैव सम्वेदन नीलात्मत्त्वाद्यतस्तस्यास्तथैव[3] नीलादित्त्वेनैवानुभव इति स्वसम्वेदनमेतत्परमार्थतो नार्थसम्वेदनम्। अर्थत्त्वेनानुभवेपि स्वप्नसम्वेदनवत्। यदि वाऽर्थसम्वेदनमेव फलम्। यतः॥

यदा सविषय ज्ञान ज्ञानाङ्शेर्थव्यवस्थितेः।
तदा य आत्मानुभवः स एवार्थविनिश्चयः ॥ (३३७)

यः पुनरपरं बाह्यं न कल्पयति ज्ञानाङग एव बाह्यतया तेनावसीयते। तदा य एवात्मनो ज्ञानाकारस्यानुभवः तथैव[4] वासनानियमादर्थ इति निश्चयस्तदा निश्चयबलादर्थसम्वेदनं फलमिति व्यवस्थाप्यते। तदा विज्ञानवादेप्यर्थसम्वेदनं

फलं। तदा ग्राह्याकारः प्रमेयं। ग्राहकाकारः प्रमाणं तत्सम्वेदन(C 71a)फलं। अथवा स एवार्थ इति प्रतीयते। तस्य च सम्वेदनत्वात्सम्वेदनमेव फलम्। अपि च। बाह्यमर्थमभ्युपगच्छतामपि स्वसम्वेदनमेव फलं। यत.॥

यदीष्टाकार आत्मा [5]स्यादन्यथा वानुभूयते।
इष्टोऽनिष्टोपि वा तेन भवत्यर्थः प्रवेदितः॥ (३३८)

नहि सम्वेदनस्यान्यथात्वे वस्त्वन्यथेति (वक्तु) शक्यम्। तस्मात्सम्वेदनानुसारेणैवार्थव्यवस्थिते· तदभिन्नयोगक्षेमत्त्वाद्बाह्यवेदनं स्वसम्वेदनमेव। तेनोपचारात् बाह्यवेदनमुच्यते। अतः॥ यदीष्टाकार आत्मास्य ज्ञानस्य अन्यथा चानुभूतेर्थः। इष्टोनिष्टो वा। इष्टाकारेणानिष्टाकारेणापीष्टस्तदा तेन भवत्यर्थः[6] प्रवेदितो मुख्यवृत्याऽन्यथानुपचार एव। तस्मात्स्ववेदनमेव फलं बाह्येप्यर्थ इति दर्शयति।

नन्वसत्यत्त्वेर्थसम्वेदनमेव युक्तम्। तस्य भावादसति त्वगत्या स्वसम्वेदनं युक्तं।

तदसत्। (—)

विद्यमाने पि बाह्येर्थे यथानुभवएव सः।
निश्चितात्मा स्वरूपेण नानेकात्मत्त्वदोषतः॥ (३३९)

नहि विज्ञानवादेपि स्वसम्वेदनं मण[? न]साभ्युपगम्यतेऽपि तु तस्यैव सम्वित्ते·। अगत्यात्वङगीकरणे बाह्य[7] एवार्थः किमनङगीकृतः। यतः।

यदि बाह्य न विद्येत कस्य सम्वेदनम्भवेत्।
अर्थगत्या स्वरूपस्य बाह्य यस्य न किम्मत॥ (३४०)

सादृश्यगतिः। तत्स्मास्वरूपसम्वेदनमेव दृश्यत इति वक्तव्यं (C 71b) नागतिः। तत्र यदि बाह्येप्यर्थे स्वसम्वेदनमेव दृश्यते तदेव भवतु। अर्थसवेदनन्तु न युक्तमिति परित्यज्यते। स्वरूपेण हि वित्तीना भिन्नत्त्वात्प्रतिपुरुषं नानाकारवेदन युक्तं। नत्वर्थस्य नानाका[8]रवेदनं स्वरूपेणानेकात्मताप्रसङगात्। नानाप्रतिपत्त्यसम्वेद्यमानोप्येक एवार्थ इति बाह्यदर्शिमतम्। तत एकस्य नानारूपसम्वेदनमयुक्तम्। नानारूप एवार्थ इति चेत्। न।

अभ्युपायेपि भेदेन न स्यादनुभवो द्वयो.॥

एकस्मिन्नेवार्थे द्वयोरनुभव इति न स्यात्। स्वाकारपरिसमाप्तत्त्वात्। यस्याकारान्तरमपि तत्रैवानुप्रविश्य प्रतिभासेत तदा स्यादेकत्त्वगतिः[9] (।) अथवा न स्यादनुभवो द्वयोरिति वस्त्वर्थः। अथवा भेदेनैकैकपर्यवसानेन न स्यावनुभवः सर्व्वस्यानेकाकारानुभवप्रसङगात्॥

अदृष्टावरणान्नो चेन्न नामार्थवशा गतिः ॥ (३४१)

यद्यदृष्टमावरणमिति न द्वयदर्शनं दृष्टेनैव तर्हि एकत्त्वप्रतिपत्तिर्वारितेति कुत एकत्त्वे प्रमाणं तिमिरवच्चादृष्टम्भवेत्। चन्द्रद्वयमेव तत्रैकदर्शन द्वितीयदर्शनस्यादृष्टेन वारणादे[10]षापि कल्पना भवेत् । ततस्तिमिरसमानत्वाददृष्टस्य नार्थवशा गति. । अदृष्टस्तेनैव बाह्यार्थशून्यं विज्ञानं जन्यत इति किन्नाभ्युपगम्यते । अथादृष्टमर्थयोग्यदेशावस्थितार्थप्रतिपत्तिवारणे कथ समर्थमिति वक्तव्य ॥

(c 72a) तमनेकात्मकं भावमेकात्मत्त्वेन दर्शयेत् ।
तददृष्ट कथन्नाम भवेदर्थस्य वेदकम् (।) (३४२)

—इति सग्रहः ॥

अपि च ।

अभ्यासबलभावित्त्वमिष्टानिष्टार्थस[11]म्विद ।
दृश्यते दृष्टसाध्यत्त्व कथमत्रावगम्यते ।
तदेवादृष्टमितिचेत्सिद्धमेव समीहित ॥
वासनाबलसम्भूत सर्वमेवेति सिद्धित ।

ननु नार्थ इष्टानिष्टतयावभासते। अर्थाकार एव कल्पना एव तथा भवन्ति ॥ अत्रोच्यते ।

इष्टानिष्टावभासिन्य: कल्पना नाक्षधीर्यदि ।
अरिष्टादावसत्त्वानां[१] दृ[२]ष्टन्तत्रापि चेतसां । (३४३)

अरिष्टेन गृहीतानामक्षबुद्धिरप्यन्यथा दृष्टा। तस्माद[12] सदेतत् ।

तस्मात्प्रत्य(मे)ये[३] बाह्येपि युक्त स्वानुभव:फल ।
यत: स्वभावोस्य यथा तथैवार्थविनिश्चय: ॥ (३४४)

अतो बाह्येप्यर्थे स्वसम्वेदनमेव फलम्। नार्थसम्वेदनं तस्य स्वसम्वेदनार्थप्रवेशात्। अत्रापि फले विषयाकारतैव प्रमाणम् । यदाहाचार्य: । (—)

"यदा तु बाह्य एवार्थः प्रमेयस्तदा विषयाकारतैवास्य प्रमाणम्। तथाहि। ज्ञानं स्वसम्वेद्यमपि स्वरूपमनपेक्ष्यार्थाभासतैवास्य प्र[13]माणम्। यस्मात्सोर्थस्तेन मीयते। यथाह्यर्थस्याकारः शुभादित्वेन प्रतिभाति निविशते तद्रूप स विषयः प्रतीयते। यावदाकारभेदेन प्रमाणप्रमेयत्त्वमुपचर्यते।"

---

[१] अनिष्टादावसन्धान—इति हे पुस्तके । [२] इष्ट—इति हे पुस्तके
[३] तस्मात्प्रमेयबाह्येपि—इति हे पुस्तके ।

नन्वव्यतिरेकाद् ग्राहककाकारोपि कस्मान्न प्रमाणं । अत्रोच्यते ।

तदार्थाभासतैवास्य (c. 72b) प्रमाणन्न तु सन्नपि ।
ग्राहकात्माऽपरार्थत्त्वाद्बाह्येष्वर्थेष्वपेक्ष्य*ते ॥ (३४५)

नहि तदन्यरूपा बाह्यार्थस्थिति । अप[14]रार्थत्त्वात् । नहि स्वसम्वेदन परार्थं व्यवस्थापयति । आकारव्यतिरे(के)ण सर्व्वत्र समानत्वात् । 12b

यम्माद्यथा निविष्टो सावर्थात्मा प्रत्यये तथा ।
निश्चीयते निविष्टोसावेवमिति

आकारवशेन हि । अर्थ एव नीलादिक स्वाकारेण निविष्ट इति प्रत्ययः । ते(?ना)र्थाकार एवार्थकल्पनानिमित्त तत स एव प्रमाणम् । एवन्तर्हि अर्थवेदनमेव फलं किमिदानी स्वसम्वेदनेन ।

असदेतद्यतः (—) तदर्थकल्पनमात्मसम्वेदनानुरूपमेव ।[1] तदेवाहाऽत्म-सम्विद. । यत.

आत्मसम्विदः (।) (३४६)
इत्यर्थसम्वित्सैवेष्टा यतोर्थात्मा न दृश्यते ।

यतो ऽ(दृ)श्यमानन्न प्रत्यक्षस्य प्रमेय । कथं हि परोक्षेऽर्थे प्रत्यक्षस्य प्रवृत्तिः प्रत्यक्षस्य च फलव्यवस्था प्रस्तुता तस्मात्स्वरूपप्रत्यक्षत्वादर्थस्यासम्वेदनात्स्व-सम्वेदन फलम् ।

तस्या बुद्धिर्निवेश्यार्थः† साधनन्तस्य सा क्रिया । (३४७)

तेन हि सा क्रियतेऽतस्तस्य सा फलं तत्क्रमेण तस्या प्रथ[2]नात् । एवन्तर्हि बाह्येर्थे प्रमाणमाकार. सम्वेदनन्तु स्वरूपे फल प्रवृत्तमिति विषयभेदः ।

तदसत । यतः ।

[ यथा निविशते सो ऽर्थः तथा हि स प्रकाशते । ]
(अर्थस्थितेस्तदात्मत्वात्) स्वविदप्यर्थविन्मता§ (।) (३४८)

स्वविदे(वे)यं परमार्थतः । व्यवहारतोऽर्थवित् । ततो व्यवहारापेक्षयाऽर्थ एव फलं । (c. 73a) अर्थ एव प्रमाणमिति कुतो विषयभेदः परमार्थापेक्षयापि स्वरूपे द्वयमपि । तथापि कुतः । एतदेवाह ।

तस्माद्विषयभेदोपि न

---

* ष्वपेक्षते–इति हे पुस्तके ।

† एवेत्यधिक पाठ स पुस्तके ।

§ पादव्यत्यासोऽत्र स पुस्तके ।

स्वसम्वेदन तर्हि बाह्येऽर्थे फलं[3] (।) प्रमेये कस्मान्नोक्तमित्याह।

स्वसम्वेदनं फलम् (।।)

उक्त स्वभावचिन्तायां तादात्म्यादर्थसम्विदः*। (३४९)

परमार्थापेक्षया स्वसम्वेदनमेतदर्थसम्वेदनमपि। यदि नाम तदर्थसम्वेदनमनिरूपितसम्वेदनस्वरूपस्य निरूपणायान्तु स्वसम्वेदनमेव।

ननु यदि स्वरूपेणार्थस्यानवभासन ज्ञानमेव स्वेन रूपेण प्रतिभाति कथमर्थस्य प्रमेयता। तादृशत्त्वादर्थस्येति चेत्। तादृश इति[4] कथ ज्ञायते। नानाकारा हि विज्ञप्तय इति चोक्त।

अत्रोच्यते।

तथावभासमानस्य.तादृशोन्यादृशोपि वा।
ज्ञानस्य हेतुरर्थोपीत्यर्थस्येष्टा प्रमेयता। (३५०)

यत्त्वपि जलावभासि विज्ञानमुपजायते जलमन्तरेणैव तथापि मरीचिकाः समाश्रित्योदयवत कथञ्चिदर्थहेतुतामाश्रित्यार्थालम्बनमुच्यते।

ननु यदि हेतुत्त्वादेवालम्बनता वासनाहेतुकमेवमुक्तं। न हि सा न हे[5]तुः। दृष्टशक्तिश्च वासना तदाकारजनने। तथा च प्रतिपादित भवतैव। यदि तु तदाकारता तथा भूतार्थमन्तरेण न भवेत्। युक्तमर्थसम्वेदनं। अन्यथा तु।

यथाकथञ्चित्तस्यार्थरूप युक्त्यावभासिनः।
अर्थग्रहःकथ सत्य न जानेहमपीदृशम्।। (३५१)

सन्निहितमर्थमन्तरेणापि यद्यतदाकारता तदा तस्य तावदर्थस्य न ग्रहणम्। अन्यदेशदृष्टस्य (c 73b) ग्रहणमिति चेत्। अन्यदेशेपि[6] यदि तदा नास्ति कथं प्रतिभास॰। यत्रास्ति तत्र प्रतिभास इति चेत्। यदि क्वापि नास्ति क उपायः। प्रतिभासादेव ज्ञायते। अवश्य क्वापीति प्रतिभासोऽर्थमन्तरेण न दृष्ट इति प्रतिबन्धादेवं गति.। एवं तर्हि स न दृष्टः कथं प्रतिभाति। सोपि जन्मान्तरादौ दृष्ट एवेति चेत्। न। नियमाभावात्। अदृष्टोपि प्रतिभास इष्यते। एवन्तर्हि।

अदृष्टोपि हि देशादावर्थोऽन्यत्रावभासते।
यदि सर्व्वन्तदा सर्व्व सर्व्वदर्शी प्रसक्तिमान्।

अदृष्टस्यापि देशान्तरादौ व्यवस्थितस्य प्रतिभासने सर्व्व. सर्व्वदर्शी प्रसक्तः। अवस्थाविशेषमन्तरेण न प्रतिभाति। तिमिरादौ प्रतिभातीति चेत्। न। तिमि-

---

* पादव्यत्यासोऽत्र स पुस्तके।

रस्य सर्व्वसाधारणत्त्वात्सर्व्वप्रतिभासनप्रसङ्ग । किञ्च । तिमिर(रं)दर्शनविघातकृत्. तदेव किन्दर्शनहेतु । दर्शनहेतुत्त्वे सकलदर्शनप्रसङ्गः । यदेव दृश्यते[8] यदेव दृश्यते तस्यैव जनयतीति चेत्। अविद्यमानस्यैव तर्हि दृश्यते। तदेवाविद्यमानदर्शनं जनयतु अर्थमन्तरेण दर्शनन्न दृष्टमिति चेत्। अर्थयोग्यदेशावस्थानमन्तरेणापि न दृष्ट। अनेनैव व्यभिचार इति चेत्। समानमुभयस्यापि । स एवार्थ इति चेत्। नार्थत्त्वस्याभावात्। एवभूत एवार्थ इति चेत् । सर्व्वत्र चैवं भूत. । अलौकत्त्वे सर्व्वमलौकिक। नहि दर्शनव्यतिरेकेणापरो विशेष इति प्रतिपादितम् (।)[9] प्राप्तिरिति चेत् । तदपि दर्शनमेव । अनेन दर्शनादि व्याख्यातम् ।

यथैव प्रथम ज्ञान तस्य प्राप्तिमपेक्षते ।
तत्प्राप्त्यापि पुन प्राप्तिरपेक्ष्येत्यनवस्थिति ।
(C 74a) कस्यचित्तु यदीष्येत स्वत एवाप्तिरूपता ।
प्रथमस्यापि तद्भाव इति सर्व्वसमानता ।।
प्राप्तेरथापि पूर्व्वेण प्राप्तिरूपेण सत्यता ।
अन्योन्याश्रय(मि)त्येका सत्यर्थे नोभयस्य तत् ।।
अर्थकारणशुद्धत्वात्तु ज्ञान[10] स्यास्ति सत्यता ।
तज्ज्ञानस्यापि सत्यत्त्व तत्कारणविशुद्धित ।
एव परपरापेक्षादनवस्था प्रसज्यते ।
वासनाबलभावित्त्व मृगतृष्णाजलेस्ति तम्(त्) ।
तत सकलमेवन्तदिति कल्प्यमनाकुल ।
अनादिवासनासङ्गप्रतिबद्धप्रवृत्तय ।
यस्य नीलादयस्तस्य न दोषो नाम दृश्यते ।
ननु वासनाप्रतिबन्धोपि स्वसम्वेदनज्ञानात्मनि कथ।
स्वरूपात्प्रतिबद्धश्चेदपर केन[11] गृह्यते ।
स्वरूपमेव स यदि नाममात्र कृतम्भवेत् ।

यदि स्वरूपव्यतिरिच्यमानात्मा प्रतिबन्धो यत्र च स तदा पृथग्भूतग्रहणेन स्वसम्वेदनं। न चेत्पृथग्भावः सम्बन्धसम्बन्धिनावेव तर्हि न स्त इति न सम्बन्धग्रहणसम्भव ।

तदप्यसत्। यत ।
वासनाप्रतिबन्धोय सुखेनैव प्रतीयते ।
स्मरण पूर्व्वविज्ञानप्रतिबद्ध प्रतीयते ।

स्मरणमुपजायमानमेवात्मनोऽनु[12]भवप्रतिबन्ध प्रतिपादयति तदव्यवसायवशादेवमुच्यते। अस्मरणे तर्हि कथं वासनाप्रतिबद्धत्त्वप्रतीतिः। तथाहि। 132a

दृष्टमेतन्मयेत्येव स्मरण वेदने सति ।
न त्वस्मरणमात्मान निवेदयति कस्यचित् ॥

(c 74b) **स्मरन्नेव दृष्टमेतदिति निरूपयत्यन्यथा दृष्टत्त्वस्य निरूपयितुमशक्यत्वात्। अस्मरणसम्वेदने तु न दर्शनानुसारित्वप्रतीति ततस्तद्वासनाप्रति**[13]**बद्धमिति कथं प्रतीतिः तत्रापि दृष्टमिति प्रतीतेः। स्मरणेन सहैकीकृत्य तस्यापि प्रतीतेरन्यथा व्यवहारायोगात्। स्मर्यमाणदृश्यमानयोरेकतया प्रतीतिः। तत सकल वासनाप्रतिबद्धमेव। अथ स्मर्यमाणदृश्यमानयोरेकताप्रतिपत्तिर्भ्रान्ता। न। बाधकाभावात्।**

एतदेव स्मरामीति पूर्व्वदर्शनमत्र मे ।
न (हि) बाधकमत्रास्ति तत्र स्मृत्या सहैकता ।

**अथ स्मरणाकारेण पूर्व्वरूपन्न गृह्यते। तथा सति पूर्व्वपरयो॰ कथम्भेदप्रतीतिरतोऽद्वैतमेव। तथासति सुतरा सम्वेदनात्मता। अपिच। बाह्ये वस्तुनि कार्यकारणभावनियमस्य कर्त्तुमशक्यत्त्वात्। तथाहि।**

बाह्यस्यादर्शनात्पूर्वं कथम्विज्ञानकार्यता (।)
विज्ञानस्य तु दृष्टत्वाद्युक्ता विज्ञानकार्यता ।

**तथा (—)**

देशकाला[2] द्यवस्थातस्तत्कार्यस्यान्यथोदयात् ।
कार्यकारणभावस्य नियमो नोपपत्तिमान् ।

**सम्वेदनपक्षे तु सम्वेदन पूर्व्वसम्वेदनादेवोपजायते। यद्यपि नामाग्निमन्तरेण भवति धूमस्तथापि धूमवासनातो भाव इति नाहेतुको जनप्रतिभासश्च। मशकवर्त्तिमृगतृष्णिकाधूमजलवत्। बाह्यमेव वासनाबलाद् भवति चेत्। इष्यत ए**[3]**वैतद्वाह्यवासनाबलायातत्त्वान्नाममात्रमेव कृतं स्यात्तच्च लोकेनैव** (c 75a) **कस्तवात्र पुरुषकारः।**

**ननु वासनाकार्यत्त्वेन न प्रतिभाति कथम्वासनाकार्यता। अकस्माद्धूमादग्नि प्रतियतः किं बाधककार्यत्त्व प्रतिभाति। पर्यालोचयतो भवतीति चेत्॥** वासना**कार्यत्त्वेपि समान। जन्मान्तरादिवासनाप्रबोधस्यापि सम्भवात्। वृद्धस्य बालक्री**[4]**डास्वप्नसम्भववत्। ततश्च (—)**

जन्मान्तरादिदृष्टस्य प्रतिभास इतीरित ।
वासनाबलभाव्ये वावभास इति निर्णय ।
ततश्च पूर्व्वपूर्व्वस्य विज्ञानस्यावभासन ।
सर्वत्र बाह्य विज्ञानाद्वाह्यमेवोपपादितम् ।

अनादिवासनासङ्गविधेयीकृतचेतसाम् ।
विविध ( ) प्रतिभासोयमेकत्र स्वप्नदर्शिनाम् ।
कार्यत्वात्सकल कार्य वासनाबलसम्भव ।[5]
कुम्भकारादिकार्यम्वा स्वप्नदर्शनकार्यवत् ।
प्रधानमीश्वर कर्म यदन्यदपि कल्प्यते ।
वासनासङ्गसम्मूढचेत प्रस्यन्द एव स ।
प्रधानाना प्रधान तत ईश्वराणा तथेश्वर ।
सर्व्वस्य जगत कर्त्री देवता वासना परा ।
असमञ्जसवृत्तस्य सहोद्वेगप्रवर्त्तन ।
अन्यथा जगत कर्त्ता प्रेक्षापूर्व्वक्रिय कथम् ।
स्वातन्त्र्ये[6] वर्त्तमानस्य शक्तस्य परिजानत ।
असमञ्जसवृत्तित्व यदि क केन शिक्ष्यताम् ।
उपदेशस्य दाता चेत्स एव स्वान्यजन्मन ।
स्वय कर्ता विरूप य तस्य का न्यायवादिता ।
असमञ्जसभावाय विधाता चेत्समञ्जस ।
प्रख्या[? क्षा] लनादमेध्यस्य दूरमस्पर्शनम्वरम् ।
अशक्यमन्यथाकर्त्तुमत्र (c 75b) शक्ति कथम्मता ।
वासनावलत सोपि तस्मा[7]देव प्रवर्त्तते ।
इति प्रधानेश्वरकर्त्तृवादनद्य सदा शीघ्रवहा प्रवृत्ता ( । )
विशन्त्य एवाद्वयता प्रयाति तद्वासनामेयसमुद्रमेव ।
वासनैव वर मूढा सदुपायेन मेध्यता ( । )
तत एव समस्तस्य वाछितस्य प्रसिद्धय ।

**तस्मादर्थग्रहः कथमिति नाह प्रष्टव्यस्तदभिप्रायपर्यन्तनयनार्थमेतदहन्तु पुनरीदृशन्न भवत. सर्व्वथा समर्थ[8]यितुं शक्तः।**

अतिदुर्मन्त्रित यातु क समर्थयितु क्षम ।
अत्यन्तभूमिबीजस्य कर्षक कि करिष्यति ।

**ननु यदि ग्राह्यग्राहकाकारता नास्ति कथन्तथाव्यवहारः। अयमपि भवतो व्यामोह एव (।) नहि ग्राह्यादिव्यवहारोपि सम्विदितः। सम्विदितस्वरूपे निमज्जनात् । तदात्मक एव व्यवहार इत्यर्थ. । तथा हि ।**

**अविभागोपि बुद्ध्यात्मा विपर्यासि[9]तदर्शनैः ।**
**ग्राह्यग्राहकसम्वित्तिभेदवानिव लक्ष्यते । (३५२)**

मन्त्राद्युपप्लुताक्षाणां यथा मृत्शकलादय: ।
अन्यथैवावभासन्ते तद्रूपरहिता अपि । (३५३)

अविभागो बुद्ध्यात्मेति स्वसम्वेदनप्रसिद्धमेतत्। तथा च प्रतिपादितम्। विप(र्य)स्तदर्शनैस्तु ग्राह्यादिरूपेण गृह्यते। न। अपि तु लक्ष्यते। परेण सद भावेपि दृश्यत इति विप[10]र्यासमारोप्य तथा व्यवहार.। दर्शनमेतदिदानी मम, बाह्यं तु परेण दृष्टमासीदेव। एतत्पुनरसौ न विचारयति (—) परेण यद्दृष्ट तन्मया दृष्टमिति कथम्। (c. 76a) नहि परोप्येव जानाति। तस्यापि तद-स्मत्सम्वेदनवदेवासाधारणम्। अथ सोपि मया दृष्टमित्यनुमानादेव जानाति। तथा सतीतरेतराश्रय[11]दोष.। कार्यदर्शनभावादिति चेत्। नैकत्त्वप्रतिपत्त्यप्रसङ्गात्। नहि धूमादग्निर्ज्जायमानो महानसस्थ एव ज्ञायते। अन्यत्वाद् धूमस्येति चेत्। रोमाञ्चादिकार्यस्यान्यत्त्वादपरः परस्य ग्राह्याकार.। किञ्च। सम्वेदनाद्रो-माञ्चादयो नार्थात्। दर्शनयोश्च न दर्शनेन मिश्रीभावप्रतिपत्तिरन्यथा नान-मान[12]मपेक्ष्येत। नहि प्रत्यक्षेऽनुमान प्रवर्त्तते।

ननु रूपमेव प्रत्यक्षं परदृश्यता तु तत्राप्रत्यक्षादतोऽनुमानमिति चेत्। ननु परदृश्यता तत्रास्तीत्यत्रापि नैव प्रमाणम्। अत्र एव संदेह इति चेत्। एवन्तर्हि पीतरूपतापि नीलरूपतया दृश्यमाने किन्न सन्देहविषयः। पश्चादुपलप्स्यमानेऽग्नौ वह्निरूप[13]तास्तीति कुतः। पश्चादुपलम्भादेव। अत्र तु परदृश्यताया पश्चादपि नोपलम्भ. (।) ननु परदृश्यमानताऽनवगमे व्यवहार एव नास्ति (।) न (।) सादृश्यमात्रेण व्यवहारप्रसिद्धे.। एकत्वमन्तरेण तु व्यवहारो नेत्येतत्कुत॰।

ननु यद्यनुमानं प्रवर्त्तते परोक्षे. एकत्त्वेपि (c 76b) प्रवर्त्तते न चेत्सदृशेपि कथम्। सत्य[14]मेतत्सदृशेपि कुतोऽनुमान। केवलं दृश्यविकल्प्यार्थैकीकरणमात्रेण व्यवहारमात्रमेतत्। परमार्थतस्तु स्वरूपमात्रालम्बनमेवानुमानम्। परोक्षविषयता b1
कथमिति चेत्। न।

• ज्ञान परोक्षविषय कथमस्तु युक्त, तत्रावभाति यदि कैव परोक्षता या।
मुग्धा वभासनमथापि परोक्षतार्थस्तेन प्रतीतिरिति वाग्विधिरेष शुद्ध ।
तत सम्वादनात्तस्य प्रतीतिरिति चेन्मतम्।
प्राप्तिरस्तीति तत्तत्र प्राप्तिकाले सदुच्यताम्॥
पूर्व्वन्तु तस्य सद्भाव केन मानेन गम्यताम्।
तद्भावेन विना सैव प्रतिपन्नम्भवेत्तदा॥
भाविवस्त्वनुमाभावे कथमस्ति प्रतीतता।
सर्व्वत्र भाविरूपस्य प्रतीतिरिति निश्चय ।

द्वयोरपि प्रतीतिश्चेद्वर्त्तमानभविष्यतो ।
एकरूपप्रतीतत्व कथम्भाविभविष्यतो ।
तस्मान्नापरमार्थेन प्रतीतिरनुमानत ।
परोक्षश्चेद् घटो नास्ति कथ प[2]श्चात्प्रतीयते ।
तदेवोदययोगश्चेत्कथ स्यात्कारणम्विना ।
दृष्टत्त्वादेवमेवेति कोत्र पर्यनुयोगभाक् ।
दृष्टत्त्वात्पूर्व्वसद्भाव कस्मादस्य न कल्प्यते ।
न तथा दृश्यते तेन न तथा परिकल्प्यते ।
तथापि परिदृश्यस्य नानुमानन्तथैव तत् ।
अस्तीति ज्ञायता केन परेणेत्यसदुत्तर ।

**यत॰ ( । )**

परोपि परविज्ञातमिति नैवावगच्छति ( । )
अनुमानेन तस्यापि ज्ञातावन्योन्यसश्रय ।
परसाधारणास्तित्त्वे ज्ञा[3]तेस्तीति तदुच्यते ।
तदस्तित्त्वे (C 77a) नुमानस्य प्रतिबन्धात्प्रमाणता ॥
तस्मात्प्रत्यक्षतोस्तित्वे ज्ञाते तत्रानुमा भवेत् ।
अनुमानेन चास्तित्वे ज्ञाते व्यक्तस्य तद्ग्रह ।
अन्योन्यसश्रयादेवमेकस्यापि न सम्भव॰ ।
अन्योन्यसश्रय किञ्चिदन्यत्रापि न दृश्यते ।

**—तस्मादनादि तथाभूतानुमानपरम्पराप्रवृत्तमनुमानमाश्रित्य बहिरर्थकल्पनाया ग्राह्यग्राहकसम्वेदनकल्पनाप्रवृत्तेः ग्राह्यादिकल्पना. पर[4]मार्थतः सम्वेदनमेवाविभागमिति स्थितं। कुत एष भवत. प्रबोध इति चेत्। मन्त्राद्युपकृतदर्शनाना मृच्छकलादीना तद्रूपरहितानामपि सर्प्पादिरूपेण प्रतिभासनात्। ते हि परैरदृश्यमपि दृश्यतया व्यवहरन्ति। यावदेषामव्युत्पत्तिः। यदि तु यत्स्वरूपं यत्तथैव तत्प्रत्यक्षतो वेद्यते। नह्युत्पत्तिमत्पद्येरन्। प्रत्यक्षमपि व्युत्पत्तिमपेक्ष्य तथेति चेत्। नानुमानस्य साम[5]र्थ्यदर्शनात्। प्रत्यक्षस्यैव सामर्थ्यमिति चेत्। नानुमानस्य प्रामाण्याप्रसङ्गात्। भवतु प्रत्यक्षमेव तदिति चेत्। तदेव तर्हि वासनाबलायातमव्यक्तस्यापीति न प(र)मार्थ॰। अपि च विपर्ययेप्यनुमानमस्त्येव तत्कथमनुमानद्वयम्भवेत्। उभयपक्षे भवत्विति चेत्। न ( । ) प्रतिपुरुषं भावव्यवस्था- (C 77b) प्रसङ्गात्। भवतु को दोष इति चेत्। तदेव स्वसम्वेदनमायातं। परस्परामिश्रणेनासाधारणत्वात्[6] ( । ) तस्मात्परस्तथा न प्रतिपद्यते तथापि**

साधारणत्वेन प्रतीतिः। अथैतदेव कुतः। परो न प्रतिपत्तिमानिति। अनुमानेनेति चेत्। विपर्ययेपि तर्हि प्रवर्त्ततामनुमानं। विपर्ययेनुमानमसदिति चेत्। कथ। एकत्वेन प्रतिबन्धाग्रहणात्। सादृश्येप्यनुमान कृतार्थमेव। इह तु पुनरदर्शनानुरूपा क्रिया दृश्यमाना नियमेनादर्शनमनुमापयति। एतच्च पर एवाभ्युपगच्छति।

तथैवादर्शनात्तेषामनुपप्लुतचेतसाम् * ।
दूरे यथा वा मरुषु महानल्पोपि दृश्यते । (३५४)

यद्यसावर्थः परेणापि दृश्यत इति। एव परस्याप्यभ्युपगमः। तथा महानेवायमिति प्रतिपत्त्या तदर्थितयोपसर्प्पणं साधारणमिति कृत्वा तस्मादन्यथानुमाने परित्यजत्येव ता दृष्टमित्यनुमानं सकल सकलजनप्रसिद्धं। पराभ्युपगमेन तु तत्त्वदर्शिना। अथवा[8] यदेव प्रतीयते यथा तादृशादर्थकल्पने कोऽवसर। अनुमानमपि स्वाकारमात्रपर्यवसाने सति प्रत्यक्षमेव॥

ननु बाह्योप्यत्र दृश्यमानोऽदृश्यमानो वास्तीति व्यवहारिणाम्भवत्येव प्रतीति.। भवतु सापि स्वात्मन्येव निमग्ना यावत्प्रत्यक्षाभिमता। स्वात्मनिमग्नेति नापर प्रतीतिबहिर्भूत वस्त्विति विज्ञयः। (C 78a) किञ्च साधारणप्रतीतिरपि भावना बलादेव यथा स्वप्ने। कथन्तर्हि[9] मेयमानफलस्थितिः।

अत्रोच्यते।

†यथानुदर्शन चेयं मेयमानफलस्थितिः।
क्रियते विद्यमानापि ग्राह्यग्राहकसम्विदां॥ (३५५)

तदेव प्रतीयमानं वस्तु तत्रास्तीति प्रतीतिविषयतया ग्राह्यं। स्वसम्वेदनरूप परानपेक्षमिति। ग्राहकं स्वयमेव तथाभावात्प्रतीतिरूपं सम्विदिति। विकल्पनानुभवादुपजायमानेन व्यवस्थाप्यते व्यवहारतः। अनुदर्शन दर्शनानुरूपो विकल्पः।[10] अविद्यमानापि।

•अविद्यमानाप्तिके विषये ग्राह्यग्राहकसम्विदा।

अथवाऽविद्य(म)ानग्रहणेन साधारणादौ ग्राह्यादीनामिति। शेष उक्त एवान्यैः। तस्मात्सम्विदेव परमार्थतो न त्रयम्।

नन्वात्मपरिणाम एव सकल इति कस्मादविद्यमानता। यदि नाम तस्य तत्त्वादप्रच्युतस्य ते भेदपरिणामाः।

---

* चक्षुषाम् इति हे. पुस्तके।

† यथार्थ—इति हे पुस्तके।

तदाह ।

अन्यथैकस्य भावस्य नानारूपावभासिनः ।
सत्यं कथं स्युराका[11](रा)स्तदेकत्त्वस्य हानितः । (३५६)

—यद्येकः कथन्नाना प्रकाशते । नाना चेत्प्रकाशते तदेकता हीयते । यतः ।

* अन्यस्यान्यत्त्वहानेश्च नाभेदोऽरु[?रू] पदर्शनात् ।
† रूपात् भेदे हि पश्यन्ती धीरभेदं व्यवस्यति ॥ (३५७)

अन्यस्याप्येतदेव तत्त्वं । यदभेदप्रतिभासन नाम । (c 78b) अन्यस्याप्यन्यथात्त्वं नास्त्येव । नेष्यत एवेति चेत् । एवन्तर्हि रूपभेदप्रतिभासने सति कथमभेदाभ्युपगमः । यदि ना[12]म भवता नेष्यते भेदः स तु पुनरप्रतिभासमानेपि कथमभ्युपगन्तव्यः । रूपाभेददर्शने हि सत्यभ्युपगम साधु. । यदि सर्व्वे एव ते भेदा प्रकाशरूपा. सर्व्वेषा सत्यता । अथाप्रकाशरूपाः कथमप्रकाशाः प्रकाशादभिन्नाः । प्रकाशत्त्वे[?त्व आ]त्मवत्सर्व्वे एव सत्या भवेयु. । आत्मवदेव । प्रकाशरूपतैव चात्मनो रूप ततः सर्व्वे एवात्मानः स्यु. । तत[13]. परिणामपक्षक्षय. । अथ बहुत्वं भ्राति॰ । तथा सति न किञ्चिदिति प्राप्तं सकलमेव शून्यम्भवेत् । भ्रान्तिरपि नामात्मव्यतिरेकेण नैवास्ति । किम्वा भ्रान्तिरिति नामकरणेन । अभावे भ्रान्ते॰ सर्व्वमेतन्न भविष्यतीति न तत्त्व [? त्वत.] भेदः । ततोऽतत्त्वाभासनिमितत्त्वादभ्रान्तिरिति व्यवस्थाप्यते ।

नास्यास्ति भ्रान्तिता यावन्निवर्त्यंत्त्व नसिध्यति (।)
निवर्त्यत्त्वे च विज्ञाते भ्रान्तिरेवेति गम्यते[14] ।
भ्रान्तिनिश्चयमासाद्य प्रवर्त्तेत निवृत्तये ।
ततो निवृत्तिरित्येच्चक्रक केन गा [? ग] म्यते ।

तस्मात् ।

भावा येन निरूप्यन्ते तद्रूपन्नास्ति तत्त्वतः ।
यस्मादेकमनेकञ्च ‡रूपं तेषान्न विद्यते ॥ (३५८)

एकं न विद्यतेऽनेकत्त्वेन प्रतिभासनात् । असम्वेदनञ्च न प्रतिभातीति सम्वेदनात्मना तेन भाव्यम् । स्वसम्वेदने चानेकत्त्वाप्रतीते. । अथ तत्रान्तर्गतत्त्वा(त्)

---

* अन्यस्या इति हे पुस्तके ।

† रूपाभेदेपि पश्यन्ती धीरभेदव्यवस्थिति ।—हे पुस्तके ।

‡ एक वा इति हे पुस्तके ।

प्रतीयन्ते[15] तदन्तर्गतत्त्वं (c 79a)न प्रतीयत इति तदपि न शक्यम्वक्तुमित्युक्तं। अथवा यस्मादेकं चित्राकारमनेकञ्च न विद्यत एव। कथन्तर्हि भेदप्रतिभासः ॥ न भेद. प्रतिभातीति प्रतिपादित प्रतिपादयिष्यते च। अथवा सकलमेव भेदरूपमन्यथा च भावनाबलादवभासत इत्यसत्यं स (?)शक्यन्ते हि भावयतो विपरीतभावनया निवर्त्तयितुमित्यशक्यनिवर्त्तनता नास्तीति निश्चयाद[16] सत्यम्। 41a

ननु।

साधर्म्यदर्शनाल्लोके भ्रान्तिर्न्नामोपजायते।
अतदात्मनि तादात्म्यव्यवसायेन नेह तत्॥ (३५९)
अदर्शनाज्जगत्यस्मिन्नेकस्यापि तदात्मनः॥

अत्रोच्यते। न साधर्म्यदर्शनादेर्भ्रान्तिः।

अस्तीयमपि यात्वन्तरुपप्लवसमुद्भवा। (३६०)
दोषोद्भवा प्रकृत्या सा विततप्रतिभासिनी।
अनपेक्षितसाधर्म्यदृगादिस्तैमिरादिवत्॥ (३६१)

न खलु तिमिरतिरस्कृतदर्शनानां मशकमक्षिकादयो दर्शनान्तरबला[1]-दुपजायन्तेऽपित्वान्तरादेव तिमिरकारणात्।

ननु तिमिरादप्युपजायमानं वस्तु बलादेव न भावनाबलात्। आन्तरकारणत्वमात्रन्तु विवक्षितं। सर्व्वस्यापि त्वान्तरं कारणं वासनैव। स्वप्नादिप्रत्ययवत् (।) सा वासना यथा कथञ्चित्प्रबोधवती स्वानुरूपप्रत्ययप्रसवहेतुः। तत्र च पूर्व्वपूर्व्वमेव दर्शन साधर्म्यदर्शनं। आदौ किं दृष्ट येनेय भ्रान्तिः। दर्शने कथं तस्य दर्शनमिति वक्तव्यम्।[2] ततस्तु समानत्वादभ्रान्तिरेव सका[?सक]ला। (c 79b) अथान्यथा दर्शनं कथं सकला भ्रान्तिः। साधर्म्यदर्शनादिति। न। भ्रान्तिपरम्परैवेय। नात्रादिरस्तीति प्रतिपादितं (।) तस्मादनादिरयमसद्वासनापरिक्(ि) ल्प(त)ः संसारः। कथं प्रमाणादिव्यवस्था स्वात्मनीति चेत्।

अत्रोच्यते।

तत्र बुद्धेः परिच्छेदो ग्राहकाकारसम्मतः।
तादात्म्यादात्मवित्तस्य स तस्याः साधनं मतं*। (३६२)

तदेव साध्यं तदेव साधन सैव[3] सिद्धिः।

---

* तत —इति हे पुस्तके।

तत्रात्मविषये माने यथा रागादिवेदनम् ।
इयं सर्व्वत्र सयोज्या मेयमानफलस्थितिः ॥ (३६३)

अर्थादयो हि भावनावशादुपजायमानाः स्वसम्वेदनरूपा इति प्रतिपादितं(।) अर्थादिसम्वेदनञ्च प्रत्यक्ष प्रमाण (।) तत्राव्यतिरिक्त(ा) एव प्रमाणप्रमेयप्रमितिव्यवस्था। यदुच्यते।

"चतसृषु चैवम्विधासु तत्त्व परिसमाप्यते (—) प्रमाता प्रमेय प्रमाण प्रमितिरिति" * (।)

तदसत् एक[4]त्रैव सर्व्वपरिसमाप्ते· । ननु सुखादौ यदि नामाव्यतिरेकः । पीतादौ व्यतिरेक इति चेत्। न। इयमेव सर्व्वत्र योज्या मेयमानफलस्थितिः॥

यथा अर्थादिसम्वेदने तथा नीलादिसम्वेदनेपि। नीलाकारं अर्थाकारमिति वा भवतु कोऽनयोर्व्विशेष· । द्वयोरपि स्वरूपेण वेदनात् । ततो नीलसुखशरीरवेदनं स्वरूपेणैव सकलं न पररूपेण। स्वरूपेण चेत्।[5] सर्व्वं सुसम्वेदनमेव। ननु (c. 80a) नीलादिसम्वेदनेनात्मभूतो ग्राहकाकारः सुखादिवत्तत्कथ ते दृष्टान्त· । सुखादीनां कथं· स्वप्रकाशात्मकत्त्वात् आत्मवत्। केय प्रकाशात्मता नाम। अपरोक्षरूपता· यथैवं।

तत्राप्यनुभवात्मत्वात्ते योग्या स्वात्मसम्विदि ।
इति सा योग्यता मानमात्मा मेयः फलं स्ववित् ॥ (३६४)
[ ग्राहकाकारसंख्याता परिच्छेदात्मनात्मनि ।
सा योग्यतेति च प्रोक्तं प्रमाणं स्वात्मवेदनं ॥३६५॥† ]

तेपि नीलादयोऽपरोक्षरूपत्वादनुभवात्मकाः। तत· सुखादिव[6]देव स्वसम्विदि योज्याः। नहि तेपि नीलादयः पररूपेणापरोक्षाः।

ननु चक्षुरादिबलान्नीलादीनामपरोक्षता। न(।) स्वरूपेणैवापरोक्षत्त्वात्। नहि यतः चक्षुः प्रसृत ततोऽपरोक्षं नीलं चक्षु प्रसृतमपि कदाचिन्नापरोक्षयति। अप्रसृतत्त्वेप्यपरोक्षत्त्वसम्भवात्। तथा हि।

रागादिसम्भवे रूपमन्यथैवावभासते ।
चक्षुष प्रसृतत्त्वेपि स्वरूपानवभा(स)नात् ॥

---

* वात्स्यायनीये न्यायभाष्ये १।१।१ (पृष्ठे १) स्वल्पभेदेन ।

† अय पाठो हे पुस्तके विद्यते परमत्र मूल व्याख्या च न दृश्येते। चिन्त्यमतत् ।

**यदि चक्षुरादिकस्याभिमुखीकरणेपि स्वरूपेण विषयस्यानवभासन कथमसावपरोक्ष । स्वरूपावभासन[न्नु वासनामन्तरेण चक्षुरादिप्रतिबद्धं न परस्परापेक्षया]मेवापरोक्षता । अथ भावनावशादय दोषश्चक्षुष. (।) तदाह ।**

यदिभावनया चक्षुरादिकस्यान्यथा गति ।
भावनाबलत सर्व्व नीलादेरवभासन ।

**भावना हि वासनाऽपरनामिका चक्षुराद्यायातप्रतिभासस्य हेतुः ।** (c 80b) **तदा वासनाबलभाविन एक[8][?व]नीलादिप्रतिभासा· ।**

**नन्वन्यथा प्रतिभासन वासनाहेतु । स्वरूपप्रतिभासनन्तु वासनामन्तरेणेति चक्षुरादिप्रतिबद्ध न परस्परापेक्षया । सर्व्वेषामन्यत्वात् । ततो नेकप्रतिभासेन ज्ञायते कि स्वरूपमिति प्रतिभासः प्रमाण । न चेद्व्यभिचारी कुत आश्वास· । तस्मात् ।**

प्रतिभास समस्तोपि-भावनाभावनिर्मित ।
रवरूपाभिमतादन्यप्रतिभासश्च रू[9]पवत् ।

**बाध्यबाधकभावस्तु प्रत्युक्त एव । तस्मात्स्वसम्वेदनमेव फलं बाह्येप्यर्थे, तदाकार. प्रमाणम् ।**

**ननु साकार विज्ञानमिति न युक्त । तथा हि ।**

यदि दर्पणवत्स्वच्छमुपधानोपरागत ।
तदावभासन प्राप्त चक्षुरादिर्न चेष्यते ।।
यावत्सन्निहित सर्व्व दर्पणे त(त्)प्रकाशते ।
तत सर्व्वस्य रूपादेरवभास प्रसज्यते ।।
अथ दर्पणवच्चक्षुरवभासस्य कारणम् ।
तत्सक्रा[10]न्तस्य दृष्टि स्यादनृते दर्पणादिवत् ।।
ततो न ज्ञायते रूप कीदृक्कि परिमाणकम् ।
वर्ण्णस्यापि विपर्यास काचाभ्रपटलादिवत् ।।
गोलकादथ निष्क्रम्य रूपादिष्वनिपातिन ।
ज्ञायन्ते निजरूपेषु ग्राहका महदादिषु ।।
विशिष्ट जायते रूप प्रदीपालोकसङ्गमात् ।
यदि स्वरूपसम्वित्ति प्रदीपालोकसङ्गवत् ।
न स्यात्त्रापि चान्यस्य व्यापारादनवस्थिति [11] ।
अथ स्वरूपसम्वित्ति तदा ते रश्मय कथम् ।
तस्मादर्थे स्थिते ज्ञान (c 81a) तदाकार प्रवर्त्तते
तस्मादुत्पादमात्राच्चेत्सर्व्वाकार प्रसज्यते ।।

यत एव तदुत्पत्ति तदाकार भवेद्यदि ।
चक्षुराकारतापि स्याज्जायते चित्ततोपि यत् ॥

**अत्रोच्यते ।**

**सर्व्वमेव तु विज्ञानं विषयेभ्यः समुद्भवत् ।**
**तदर्थस्यापि हेतुत्त्वे कथंचिद्विषयाकृतिः ॥ (३६६)**

**नहि यत्र एवोत्पद्यते[12] तदाकारमेव भवति। तथा हि।**

**यथैवाहारकालादेर्हेतुत्त्वेऽपत्यजन्मनि ।**
**पित्रोस्तदेकस्याकारं धत्ते नान्यस्य क (स्य) चित् ॥ (३६७)**

**नहि पित्रोर्द्वयोरपि समानाकारता धत्ते। तत उत्पद्यमान. स्वतः। अपि तु कस्यचिदेव। तस्मादर्थदेवार्थाकारमिति। तथाहि।**

दूरदेशस्थिताद्वृक्षात्तदाकार हि जायते ।
विज्ञान नेन्द्रियाकारमिति दृष्टमिद सदा ॥

**तद्धेतुत्वेन तुल्ये[13]पि तदर्थैव्विषये मतम् ।**
**विषयत्त्वं तदन्येन तदभावे न तद्भवेत् ॥ (३६८)**

**न हेतुतया विषयोऽपि तु तदाकारविज्ञानहेतुतया। हेतुतया विषयत्त्वे चक्षुरादीनामपि विषयत्त्वं। तदाकारतया मरीचिकादिजलज्ञानस्यान्यदेशं जलमपि भवेत् विषयः। नह्याकारमन्तरेण बोधरूपं विज्ञानं सम्वेद्यमानमन्यथा वा तदाकारविषयव्यवस्थापने समर्थं प्रतीतेतरावस्थयोरयो[14]गादिति प्रतिपादितम्। यदि तत्प्रतीयते (c 81b) किमपरेण व्यर्थकत्त्वात्। अथ न प्रतीयते तदापि अशक्तेरिति। न ह्यप्रतीयमानं प्रतीतिविषयः। प्रतीयमानञ्चेत्सैव तस्य तद्रूपताप्रतीतिः। व्यतिरिक्ता च क्रिया न युक्तेति शतशः प्रतिपादितम्।**

**ननु चाकारः प्रमाणं स्वसम्वेदनं फलमिति साकारसिद्धौ स्यात् (।) तदेव तु कथं सिध्यति। उक्तमत्र। अपि च।**

विषयज्ञानतज्ज्ञानविशेषाद् बुद्धिरूपता ।

**—विषये रूपादौ यज्ज्ञानन्तदर्थस्वाभासं, विषयज्ञाने तु यज्ज्ञान तदर्थानुरूपज्ञानाभासं। स्वाभासञ्च। अन्यथा यदि विषयज्ञानमर्थाकारमेव स्यात्। स्वाकारमेव** 14b
**वा विषयज्ञानज्ञानमपि तदविशिष्टं स्यात्। विषये यत् ज्ञानं तदर्थस्वाभासमिति साध्यं। उत्तरो हेतुः। अन्यथेत्यादिबाधकं प्रमाणम्। कीदृशं मम ज्ञानमासीदिति यदा पर्यालोचयति[16] तदाऽर्थप्रतिभासमेव स्मरणेन व्यवहरति नान्यथा। यश्च यथाधिमोक्षेण विषयीकृते तथा भवति यथा गौरित्यविमोक्षेण विषयीक्रियमाणः शावलेयः। तथाहि।**

एवम्भूतोऽवभासो न..ज्ञानेऽर्थस्तु कीदृश ।
इत्यर्थस्य परित्यागाज्ज्ञानस्यार्थाविनिश्चय ।

यदि केनचिन्नियुज्यते कथमसावर्थ इति भवता ज्ञात तदाऽर्थप्रतिभासस्तादृशोऽर्थस्तत्रास्ति न वा, तादृशोऽन्यथा वेति न निश्चय इति प्रत्युत्तरयति ।[1] ततोर्थपरित्यागी प्रतिभास एव ज्ञान। (C 82a) एकत्त्वे त्वर्थस्य तत्रैव निश्चय तत्रैवा निश्चय इति कथ। निश्चयानिश्चययोर्विरोधात्। अर्थस्तु न प्रतिभासे निश्चय.। नार्थान्तरभेद इति तत एवं ततः प्रतिभास इत्येतावत्तत्र प्रतिभाति। तदपरन्तु नेत्यर्थ एव स निश्चयश्च। भागद्वयभावादिति। तदेतदुत्तरत्र वक्ष्यते। अपि च।

अ(न)र्था*कारशङ्का स्यादप्यर्थवति चेतसि ।
अतीतार्थग्रहे सिद्धे[2]द्विरूप(ा)र्थात्म†वेदने ॥ (३६९)

यदाह। न ज्ञानं प्रतिभासते स्वसम्वेदनाभावात्। नापि स्मर्यतेऽर्थस्यैव सर्व्वत्र स्मरणात्। तत्र यथार्थोपपत्या ज्ञानेऽर्थस्य[? :] परिकल्प्यते (।) ज्ञानं तथा स्मरणानुपपत्त्यापि न सम्विदित ज्ञानमस्ति न च तस्याकारता ततो द्विरूपं ज्ञानमिति प्रत्यक्षबाधः प्रतिज्ञाया.।

सन्दिग्धे हेतुवचनाद्व्यस्तो हेतोरनाश्रय ।
दृष्टान्ते च प्रतिबन्धग्रहणे हेतुवृत्तित ।

न चैतदस्ति। सर्व्वे[3]त्रार्थाकारस्य विवादास्पदत्त्वात् इति चेत्। अयुक्त (।) यतो यत्रार्थोऽस्ति तत्र नासौ ज्ञानस्याकार इति स्यादपि शङ्का। अनर्थवति तु चेतसि केशादौ पीताद्यवभासे च सिद्धमेव द्व्याकारत्त्वं सम्वेदनञ्च। तत्र परोक्षं विज्ञानमित्येतदेव प्रत्यक्षबाधितं। ततस्तद्दृष्टान्तदृष्ट्या प्रतिबन्धग्रहणम्। ततश्च तस्य तथाभूतः प्रतिभास इति तद्द्वारायातो निश्चयः कथमर्थे भवेत्। सर्व्वत्र च विज्ञाने एवमे[4]व निश्चय इति साकारत्त्वसिद्धिः। स एव प्रतिभासत्त्वनिश्चयस्वभावो विषयज्ञाने (C. 82b)त(ज्)ज्ञानस्य स्वभावः। अथ कदाचित्तत्राप्यर्थ एवास्ति यदि न व्यक्तिर्जातिरेव भविष्यति।

अत्रोच्यते।

नीलाद्याभासभेदित्त्वान्नार्थो जातिरतद्वतो ।
सा चानित्या न जातिः स्यान्नित्या वा जनिका कथम्॥ (३७०)

---

* हे पुस्तके अनर्थाकार—इति ।

† द्विरूपत्वात्म—इति हे पुस्तके ।

—नहि नीलादिरूपा जातिर्व्वर्णाद्याकारशून्यत्वात्। हेतुत्त्वेनानित्यत्त्वाच्च न सा जातिः।। अथ नित्या न जनिका नित्यस्य जन॰कत्त्वाभावादिति प्रतिपादितं।।

नामादिकं निषिद्धं प्राक् नायमर्थवतां क्रमः।
इच्छामात्रानुबन्धित्त्वादर्थशक्तिर्न्न सिध्यति ।। (३७१)

सकलमप्येतत्प्रागेव प्रतिपादितमिति न प्रपञ्च्यते।

स्मृतिश्चेद्द्विधं ज्ञानं तस्याश्चानुभवाद्भवः।
स चार्थाकाररहितः सेदानीन्तद्वती कथम् ।। (३७२)

अनुभवादुत्पद्यमाना स्मृतिरर्थमन्तरेण भवन्ती कथं नीलाद्याकारा। अथार्थादेव स्मृतिस्तदाकारा। तदाह।

नार्थाद्भावस्तदाऽभावात्॰स्यादर्थानुभवेपि सः ।।

यद्यर्थात्साक्षात्स्मृतिस्तदा तथैवार्थेन भवितव्यं। न चं तदस्ति। अथार्थाद्व्यवहितादपि भवति तदाकारा स्मृतिः अनुभवोपि तथैव चेदिति । यथा च तथा प्रतिपादितमेव। इहापि प्रतिपाद्यते।

आकारः स च नार्थस्य स्पष्टाकारविवेकतः। (३७३)

स्पष्टाकारश्चार्थस्तदनुभवेन गृहीतः । स च यद्यर्थस्याकारस्तथाभूतेनैव तेन भाव्यम्। अथ स्मृत्या प्रतीयमान(ा)र्थास्तथा प्रतिभा॰ति (।) एवं तर्हि अनुभवेन प्रतीयमानत्त्वात्स्पष्टतेति नार्थस्यासावाकारता (।)

(c. 83a) व्यतिरिक्तन्तमाकार प्रतीयादपरस्तथा।
नित्यमात्मनि सम्बन्धे प्रतीयात्कथित न च* ।। (३७४)

यद्यसावर्थ. परोपि प्रतीयात्। अथात्मसम्बद्ध एवासौ न परस्य प्रतिभासते। आत्मसम्बद्ध इति कोर्थः। किमात्मकार्योऽथ तदात्मा। यदि कार्यस्तदा परस्य प्रतिभात्येव। नहि कार्यत्त्वे साधारणत्त्वमपैति। अथ तदात्मा (।) तथा सति सम्वेदनात्मकत्त्वमेव। तादात्म्ये[8] च नित्यमात्मनि सम्बद्ध एव नान्यथा। तथा च कथितमपि न प्रतीयात्। अथ प्रत्येति तदाऽन्यथापि प्रतीयात्। तथा हि(—) बाह्यं रूपादिक कथितमपि प्रतीयते परेणाकथितमपि। अथ कथित यत्प्रतीयते तदन्यदेव। एवन्तर्हि।

एकैकेनापि सम्बन्धे प्रतिसन्धिः† न युज्यते ।

---

* हे पुस्तके नित्यमात्मनीत्यर्द्ध दृश्यते, व्याख्यानमप्यस्यास्ति। वार्तिकालकार भोटभाषान्तरेऽपि न दृश्यते।

† अनुसन्धान—इत्यधिक पाठ ।

कीदृशः प्रतिसन्धिरित्याह।

एकार्थाभिनिवेशात्मा

एकमिदमिति न प्रतीतिर्भवेत्। तस्य पृथक्त्वात्। कयो. प्रतिसन्धिरित्याह।

प्रवक्तृश्रोतृचे[9]तसोः। (३७५)

नानाभूतार्थग्रहणप्रवृत्तत्वात्तच्चेतसोः।

तदेकव्यवहारश्चेत् सादृश्यादतदाभयोः।

भिन्नात्मार्थः कथ ग्राह्यस्तदा स्याद्धीरनर्थिका॥ (३७६)

सादृश्येन हि य एकव्यवहार. स दृष्टयोरेव नान्यथा (।) न च परवृश्यदर्शनं कदाचिदपि तत्य (?तत्कथं) व्यवहार एकत्त्वेन। अत्र हि परस्परविविक्तार्थप्रतिभासनमेव। अथ सादृश्यम्वस्तु (c. 83b) भूतं ततस्तदनुसारेणैकमेतदिति प्रतीयात्। एवन्तर्हि। अकथि[10]तेपि स्वप्रतीत्यनुसारेण परस्यापि प्रतीयात्। यदापि परो न कथयति। मयाप्येवं प्रतिपन्नमिति। तदात्वसत्त्यं कथयति। तदा कथं प्रतिपत्तिरर्थमन्तरेणैव। एवमेव दृश्यत इति चेत्। तदा तर्हि स्यादनर्थिका बुद्धि.। यथा परप्रतिभासमन्तरेणैव परप्रतिभासावसायिनी धीस्तथार्थप्रतिभासनमन्तरेणाकारान्यादिति सिद्धमाकारवत्त्वं ज्ञानस्य। यदि नाम पर्यालोचनया बा[11]धकप्रमाणबलाद्वा कस्यचित्साकारता ज्ञानस्य स्मृत्यादिकस्य। सर्व्वस्य तु कुतो भवतीत्याह।

तच्चानुभवविज्ञानमुभयाङ्गावलम्बिना।

एकाकारविशेषेण तत् ज्ञानेनानुबध्यते॥ (३७७)

अनुभवविज्ञानमस्मृतिरूपं नीलादिविषयं द्वितीयेन तद्विषयेण स्मरणरूपेणानुबध्यते अनुमीयते परामृश्यते। किम्भूतेनोभयाङगावलम्बिना। नीलप्रतिभास ज्ञानं ममासीदिति। न तु यथाभूतं।[12] तदर्थापत्त्या निश्चीयते परैः। केवलं तथा भूतमनुसरति कश्चित्। न चार्थापत्तिर्लौकिकस्य कस्यचिदुदयवती। नहि लोक.एवं प्रत्येति (---) येनार्थो दृष्टस्तेन मम बुद्धिरपरास्तीति।

नहि बुद्धेः स्वरूपस्य सार्थापत्तिर्निरूपिता।

सुनिर्द्धार्यं हि तद्रूप न निर्द्धारयितु क्षमम्।

न रूपाद्य (c. 84a) वभासनव्यतिरेकेणापराकारां बुद्धिमर्थापत्याऽन्येन वा कश्चिन्नि रूपयितु क्षमः। बोधरूपतया निरू[13]पणमिति चेत्। ननु तदेव बोधरूपं न ज्ञायते। नहि प्रत्ययभेदाद्धात्वर्थभेदः। न च प्रत्ययार्थस्य भेदः।

केनोपज्ञ (?) श्च नार्थस्य भेदो नामोपगम्यते।

अर्थभेदे कथन्तेन तस्य व्याख्या प्रवर्त्तताम्॥

**तस्मान्नीलादिव्यतिरेकेण बोधो बुद्धिरिति न निरूप्यते । तस्यैव तु नीलादेः स्वभावभूतधर्मभेदो नैव सूच्यते । नीलस्य नीलविषया वा बुद्धिरिति ( । ) तेन नीलविषया बुद्धिर्ममासी[14]दित्यनुसरणे तदाकारतानुसरणमेव । तथा हि ।**

नीलान्न व्यतिरेकेण विषयि ज्ञानमीप्स्यते ।
ज्ञानपृष्ठेन भेदस्तु कल्पनाशिल्पिनिर्मित ।

**यदि तर्हि नीलादेरेव स्वभावो भेदेन बुद्धिरिति निर्दिश्यते । नीलादिकमेव तर्हि केवलं न बुद्धिर्नाम । यथा न परव्यतिरेकेण शुक्लत्वादिक ततो बुद्धिरेव न परमार्थ इत्यायातं । इष्यते बाह्योऽर्थ पारमार्थिक इति ।**

**तदेत(द)सत् ।[15] तथा हि ।** 15a

क्वचित्किञ्चित्समाश्रित्य कस्य चित्स्यान्निराक्रिया ।
यत्प्रमाणप्रसिद्ध स्यात्तद्द्वारान्यनिरक्रिया ।

**यदि प्रमाणप्रसिद्धोर्थस्तदा नद्व्यतिरेकेणापरा बुद्धिर्नास्तीति बुद्धिः परित्यज्यते । अथ बुद्धि प्रमाणप्रसिद्धा तदार्थ. । तत्र तावद्बुद्ध्याऽर्थस्य व्यवस्थापनमिति न बुद्धिरर्थवता परित्यक्तु शक्या । बुद्धिमता तु** (c 84b) **स्वसम्वेदनसिद्धत्वान्न बुद्धिरर्थोपायसाध्या । ततोऽर्थमन्तरेणापि शक्याभ्युपगमना[1] । ततो बुद्धिमङगीकृत्यतद्व्यनिरिक्तार्थपरित्याग । अथार्थोपि स्वसम्वेदनसाध्य (।) तथा सति सम्वेदनमेव तद्व्यतिरिक्तार्थ । अर्थश्चापरिदृष्टोप्यस्तीति तस्यानुपलम्भात् परित्याग. । बुद्धिस्तु न तथेत्यपरित्याज्या । किञ्च ।**

न शुक्लाद्यतिरेकेण द्रव्यमित्यध्यगीषति ।
न बुद्धेरतिरेकेण तथार्थ इनि मीयताम ।।

**तथा हि ।**

क्षणिकत्त्व न नीलादिव्यतिरेकि कथञ्चन ।
तथापि क्षणिक[2]त्वस्य नाभाव परिदीपित ।।

**तस्मान्नीलाद्याकारैव बुद्धिस्तथावसीयमानत्वात्प्रत्ययान्तरेण तेन चोभयाङ्ग-परित्यागान्नालम्ब्यत एव बुद्धि तत्कथ न द्व्याकारा । अथवा बुद्धिरेकाकारविशेषणावलम्ब्यते द्वितीयेन ज्ञानेन । एकेनाकारेणावलम्ब्यत इत्यर्थ । किंभूतेनैकेनाकारेणेति. तदाह ।**

**उभयाङगावलम्बिना ।**

**उभयाङगव्यापिना । तत एवोभया[3]ङगकल्पना । परमार्थतस्तु तावाकारौ तदेकाकारानुप्रविष्टावेवेति । तेन व्याप्तौ भवत । तौ पुनराकारौ बोधरूपता नीलाकारता च । पूर्व्वद्र[?त्र] व्याख्याने ।**

एकाकारविशेषेण एकाकाराधिकेनेति ज्ञातव्य। यदि नाम द्व्याकारतया व्यवस्थाप्यते तथापि कथ द्व्याकार। अत्रोच्यते।

अन्यथा ह्यतदाकार कथं ज्ञानेधिरोहति।

यदि तदाकारमात्मान[4] स्वसम्वेदनेन नानुभवेत्। (c 85a) कथन्तदाकारतया ज्ञानं स्मरणेधिरोहेत्। अधिरोहणन्तदाकारताजनन [?नक]। तदधिरोहतीति कुत। तथैव प्रतिपत्तेः।

एकाकारोत्तरं ज्ञानं तथाह्युत्तरमुत्तर। (३७८)

अवश्यमेतदुपगन्तव्यं। तथा हि. उत्तरमुत्तर। एकैकेनाकारेणाधिकमधिक भवति नान्यथा। तथा हि। पूर्व्वकेण नील गृहीत तदुत्तरेण नीलज्ञान तदुत्तरे[5]ण नीलज्ञानज्ञान। तदुत्तरेणापि तदधिकमिति निश्चिनोति। तदेतदन्यथा न स्यात्। एतदेवोदाहरणेन प्रतिपादयति॥

तस्यार्थरूपेणाकारावात्माकारश्च कश्चन।*
द्वितीयस्य तृतीयेन ज्ञानेन हि विभाव्यते†।[2] (३७९)

द्वितीयं ज्ञान पूर्व्वविज्ञानद्वयाकार स्वाकारञ्च विभाव्यते। तृतीयेन चतुर्थेन तदेवोभयमेकाकाराधिकमिति यावद् गणयितु स्मर्त्तुम्वा शक्नोति। अथ ज्ञा[6]नं केवलमेव द्वितीये क्षणे ज्ञायते। तत्तु ज्ञानमर्थव्याप्रि(?पृ)तत्त्वात्तत्सम्बद्धमतस्तत्र स्मरणे सति तस्याप्यर्थस्य नान्तरीयकत्त्वात्स्मरणमित्यतोऽन्यथा ज्ञान स्मर्त्तुमशक्यमिति तथा स्मर्यते। ततस्तद्व्यापृतत्वेन तदाकारमिति संकलन भ्रान्त्या तदाकारताप्रतीति। अत्रोच्यते।

अर्थकार्यतया ज्ञानस्मृतावर्थस्मृतेर्यदि।
भ्रान्त्या संकलनं ज्योतिर्मनस्कारेपि सा भवेत्॥ (३८०)

भ्रान्तिरिति स[7]म्बन्ध.। यद्यर्थस्य कार्यम्विज्ञानमथाप्यर्थे कार्यं व्यापारो यस्येति ज्ञानस्मृतौ नियमेनार्थस्मरणं। अतस्तदेव (c 85b) मूढमतिसन्तानस्य तथा भवति प्रतिपत्तिः। एवन्तर्हि ज्योतिर्मनस्कारेपि तथा प्रतीतिः स्यात्। यथा विषयकार्यता विज्ञानस्य तथालोककार्यतापि मनस्कारकार्यतापि तेन द्वयसंकलनेनापि प्रतीयेत। नहि कार्यत्त्वे कश्चिद्विशेषः। अथ विषये व्यापृतत्त्वात्तत्संक[8]लनं

* हे पुस्तके—"तस्यानुरूपेणाकारो वान्याकारश्च कश्चन।"
† विविच्यते—इति हे पुस्तके।

मनस्कारे तत्राव्याप्रि[?पृ]तत्वात्तदा तद्दर्चालोकेपि समान एव व्यापारो न ह्या-लोकमपहाय रूपे व्याप्रियते।

तदसदेतत्। तस्माद्यथाऽऽलोकप्रतिभासमिति न भवति. तथा रूपप्रतिभास-मिति न स्यात्। अथालोको विषय एवान्तर्गतत्त्वाद्रूपप्रतिभासनिश्चयेनैव गत.। ना(न। आ)लोकस्य प्रकाशकत्वेन विषयत्त्वाभावात्कथं तत्र व्यापार । अथ प्रकाश-कोप्यालोको रूप[9]निपतितत्त्वाद्रूपमेव सम्पद्यत इति विषय । तथा सति ज्ञानमपि प्रकाशक रूपनिपतितत्त्वाद्रूपमेवेति साकारालोकवत् विज्ञानमपि साकार । यथा न रूपेण विनाऽऽलोको ग्रहीतुं शक्य. तथा विज्ञानमपि। नहि रूपादिक प्रकाश्यम्विना विज्ञानम्ममास्तीति कश्चिज्जानाति। तस्माद्रूपाद्याकारमेव विज्ञानं कार्यतया तु तथा प्रतिपत्तौ।

सर्व्वेषामपि कार्याणां कारणैः स्यात्तथा ग्रहः ।[10]
कुलालादिविवेकेन न स्मर्येत घटस्ततः ॥ (३८१)

तेनापि कार्योपि घटादिः स्वकारणविवेकेन न स्मर्येत। (c 86a)अथार्थकृतः कश्चिदतिशयो ज्ञाने विद्यते येन ज्ञानस्मरणेऽर्थो वि(पि)स्मर्यते। ज्ञानग्रहणे चार्थग्रह.। केवलस्य ज्ञानस्य न ग्रहणस्मरणे। घटादिस्तु केवलोपि गृह्यते तेनानादिकञ्च। तदपि स्वपक्षबाधनाय। तथा हि।

यस्मादतिशयाज्ज्ञानमर्थसंसर्गभाजनं ।
सा[11]रूप्यात्तत्किमन्यत्स्याद् दृष्टश्चयमलादिषु ॥ (३८२)

यदि तस्य विज्ञानस्य नार्थाकारता तदार्थग्रहणेनैव सह विज्ञान गृह्यते स्मर्यते चेति कोयं नियम । तदर्थान्तर्गतन्तु नियमेन तद्ग्रहणेनैव गृह्यत इति भवति नियमः। तस्मादर्थस्वरूपमेव विज्ञानमर्थग्रहणनान्तरीयकग्रहण तत्स्मरणनान्तरीयकस्मरणञ्च। यमलकयोरेकग्रहणेन तदन्यप्रतिभास सोयमिति[12] स्मरणञ्च। श्यामवृक्षाकारतया च वृक्षग्रहणाभिमान। यदि त्वाद्यं विज्ञानमनुभूय रूपं ग्राहकाकारमेव तथा द्वितीयमपि। तदाह।

आद्यानुभयरूपत्वे ह्येकरूपे व्यवस्थितं ।
द्वितीयं व्यतिरिच्येत न परामर्शचेतसा ॥ (३८३)

परामर्शचेतसा हि द्वितीयं प्रथम(ाद्) व्यतिरेकेण न व्यवस्थाप्येत द्वितीय-परामर्शचेतसा यतः तदपि तदाद्यानुभयरूपत्त्वे सति एकरूप (c 86b) एव व्यवस्थितं[13] भवेद् ग्राहकाकार एवेति यावत्। तत· कुतो विवेकावसाय.। तस्माद्विषयाकारमेव विज्ञान तत एव।

अर्थसंकलनाश्लेषा धीर्द्वितीयावलम्बने ।
नीलादिरूपेण धिय भासमानां पुरस्ततः ॥ (३८४)

ततोर्थाकारत्त्वात् द्वितीया धीः पुरः पूर्व्विकार्थेयमवलम्बतेऽर्थसकलनमाश्लिष्यतीति अर्थसकलनाश्लेषा। आश्लिष्यतीत्याश्लेषा। अर्थसकलनेन चाश्लेषो यस्या[14] सा धी द्वितीयावलम्बत इत्यर्थ। यदि तु तदाकारता न स्यात्केवलानामप्यालम्बिता।

ननु केवलामप्यवलम्बत एव तथा हि। न जाने को मया दृष्टस्तदेति ग्राहकमेव स्मरन्ति।

तदप्यसत्।

ग्राह्ये शस [? मश]यतस्तत्र ग्राहकेप्यस्ति सशय।
सामान्येन ग्रहे तत्राद्येप्येप नय सम।

सामान्येन ग्राहकस्य स्मरणे ग्राह्यस्यापि समान एव न्याय।
तथाहि कोपि मया दृष्ट[15]इति दृश्यमानसामान्याकारेणैव स्मरण। यदि च 15b
ग्राहकस्य स्वरूपमेव स्मर्यते ग्राह्यव्यापाररहितम्। तदा तदेव तस्य रूप न ग्राह्यसन्निधानेऽन्यदासीत्। ततस्तु स्मर्यमाणस्यान्येन रूपेणाग्राहकेण कथ पश्चात्तथाभूतस्यैव ग्राहकता। अथ तत्त्वेन स्मरणे ग्राह्यसन्निविष्टमेव रूपं तदा कथं केवलस्य स्मरणं। तस्मात्तदारूढमेवास्य रूप न शक्यविवेचनमिति। एकमेव रूपाद्यात्मना, यदि च न द्विरूपता विज्ञानस्य तदा नीलाकारमाद्यमेव (c. 87a) स्यान्नोत्तरोत्तराणि। तदाहा चा र्यः[1] न चोत्तरोत्तराणि ज्ञानानि पूर्व्वपूर्व्वज्ञानविषयाभासानि स्युस्तस्याविषयत्त्वात्। यस्मात्।

अन्यथा ह्याद्यमेवैकं संयोज्येतार्थसम्भवात्।
ज्ञानेनादृष्टसम्बन्धं पूर्व्वार्थेनोत्तरोत्तरं॥ (३८५)

नहि उत्तरोत्तरस्य ज्ञानात्मन. पूर्व्वज्ञानविषयता। अ[2]विषयश्च कथमालम्ब्यते। यदात्वर्थाकारता प्रथमस्य तदा द्वितीयस्यापि। तत उत्पन्नस्य तदर्थाकारसम्वेदनाकारता। तथा हि।

तदर्थाकारविज्ञानाज्ञानज्ञानोदयेसति।
तदाकारतया योगो दूरवृक्षाद्यथोदिते॥

अथ ज्ञानमन्यथा स्मर्त्तुमशक्यं। अर्थसहितमेव स्मर्यते। तदारूढतैव तद्व्यापृततालक्षणा तस्य स्वभाव इति। तत. सार्थकस्य स्मरणं। घटादीनान्तु[3] पुन. केवलोपि स्वभावो न तेनानादिसहित एव। विषयस्तु विज्ञानसहित एवोपलभ्यते। तेन तथाभूतस्यैव स्मरण। न तु घटादीना (।)

तदप्यसत्। यत.।

द्वयोर्विवेकग्रहणे साहित्यमिति युक्तिमत् ।
नीलाकारातिरेकेण न च ज्ञाननिरूपण ॥
अथादिरूपत्वेनेति न सिद्धमिदमेव व ॥

नहि सुखादि रूप विज्ञानमिति प्रसिद्धिर्भवता । सुखादीनाम्विषयत्वा[4]त् । यथा च न सुखादिव्यतिरेकेणापर विज्ञान तथा नीलादिव्यतिरेकेणापि । (c 87b) बहिर्देशत्त्वात्प्रमेयतैव नीलादीनामिति चेत् । न । बहिरपि सुखादीना प्रमेयत्त्वाभ्युपगमात् । न च तयो. सम्वेदने बहिरन्तरिति परमार्थतो युक्तं । न ग्राहकता सुखादीना नीलादिषु । तदभावेपि तथैव प्रतिभासनात् । यच्च यदन्तरेणापि भवति न तत्तत्कृतं भवति च नीलादि ग्र[5]हणमन्तरेण सुखादिकमिति । तत· स्वरूपविशेषकृतमेव नीलादिग्रहण तदभावेपि भावादिति प्रतिपादित। तस्मान्न नीलाद्यपरोक्षतामन्तरेण नीलादिग्राहकनिरूपणमिति सिद्धमाकारद्वितय । अनुभवनीलाद्याकारतया । अपि च. भवतु ग्राहकाकारो परस्तथापि ।

सकृत्सम्वेद्यमानस्य नियमेन धिया सह ।
विषयस्य ततोऽन्यत्त्वं केनाकारेण[6] सिध्यति ॥ (३८६)

विषयस्य हि नीलादेर्धिया सह सकृदेव सम्वेदन । धिया सह न पृथक् । तत. सम्वेदनादपरो विषय इति कथ । तथाभूतमेव सम्वेदनमिति स्यात् विवेचयितुमशक्यमिति प्रतिपादित । भेदावभासनं भवतीति चेत् ।

भेदश्च भ्रान्तिविज्ञानैर्दृश्येते ता [? न्दा] विवाद्वये ॥

तद्यथा चन्द्रद्वयदर्शनमेकमे(ए)व चन्द्रमसि भेददर्शनमेवमात्मन्यपि विज्ञानस्य । न[7]तु विषय एकत्रापि भेददर्शन युक्तं विज्ञानाकारस्य भेदात् । तदात्मनि तु कथं । नहि तदेवान्यथा । कथ हि स्वरूप तेनैव (c 88a) पररूपेण गम्यते तस्याप्रतिपत्तिप्रसङ्गात् ।

न सदेतत् । यतः ।

यदि स्वरूप प्रत्येतुमन्यथा नैव शक्यते ।
पररूपन्तु सुतरा तथापि हि न शक्यते ॥

यदि स्वरूपमन्यथा प्रत्येतुं न शक्य पररूपन्तु स्वरूपेणापि प्रत्येतु न शक्यमिति स्वरू[8]पवत्पररूपमपि न शक्यमेवेति प्राप्त । तस्मादयमर्थः । स्वसम्वेदने सति न भेद प्रत्येतु शक्य स्वरूपस्य । यदि तु पुनरेकमेव चित्राकारं विज्ञान स्याच्छक्यं स्वसम्वेदनेन प्रत्येकमन्यथा योगात् । ततो द्विचन्द्रदर्शनस्यापि यथैकता न स्यान्न तत्प्रत्येतुं शक्यं स्वपराभ्यामशक्यत्त्वादिति प्रतिपादित । तस्मादुत्तरकालभाविना विकल्पेनान्वयव्यतिरेकाभ्यामिति[9]द्वयभेदकल्पना न प्रत्यक्षा प्रतीतिः ।

अयमेवार्थो भेदश्च भ्रान्तविज्ञानैरित्यादिना दर्शित.। चन्द्रद्वयाभिमतमेवाद्वयमेक-विज्ञानान्तर्गतत्वात्। एवन्तर्हि नीलपीताद्योरपि सहदृश्यमानयोरेकचित्राकारता ह्यभ्युपगन्तव्या। एवमेतत्सम्वेदनरूपस्य चित्राकारस्य तत्राप्येकत्वात्। यदि तु भेदो दृश्यते तदैवमभ्युपगन्तव्य।

सम्वित्तिनियमो नास्ति भिन्नयो[10]र्नीलपीतयोः। (३८७)

अयमेव भेदहेतुर्यद्ु त भिन्नयोगक्षेमता। चन्द्रद्वयप्रतिभासस्य तु (c 88b) भिन्नयोगक्षेमत्त्वाभावादेकतैव।

ननु विरुद्धधर्माध्यासात्कथमेकत्त्वं। अयमेव हि भेदो विरुद्धधर्माध्यासो नाम यः परस्परपरिहारस्थितिलक्षणश्चात्र विरोधः।

नैतदस्ति।

नित्यत्त्वेतरयोरेव विरोध स तथाविध ।
प्रतीत्यनुप्रवेशेन द्वयोर्नास्ति विरो[11]धिता ।

एकप्रतीत्यनुप्रवेशादेव न तयोर्व्विरोधः। एतदेव तस्य रूपं यदविप्रयुक्तं नाम। न च तेनैव तद्विरुध्यते। तस्मादेकमेव तस्याकारमिति कल्पनयोद्यते। अन्वयव्यतिरेकाभ्यां। तमेवान्वयव्यतिरेकाभावं परमार्थतो नास्तीति दर्शयति।

नार्थोऽसम्वेदनः कश्चिदनर्थस्यापि वेदनं।
दृष्ट सम्वेद्यमानन्तत्तयोर्नास्ति विरोधिता॥ (३८८)

अन्वयव्यति[12]रेकित्त्वादेकमेव नीलसम्वेदनमन्योन्यव्यतिरेकेणादर्शनात्। तथा हि।

नार्थोऽसम्वेदनो दृष्टोऽनर्थं न च वेदन ।
सदाऽवियोगादेकन्तदर्थसम्वेदन तत ॥
भेदेन विनियोगार्थं भेदविद् भेदमिच्छति ।
स चेन्नास्ति ततो भेदाभेदयो कैव भिन्नता ॥

तस्मादत्र भेद इति नाममात्रमेव परेण विधातव्यं। न परस्य काचित्क्षतिः। हेयोपादे[13]यविभागश्चेत्तत्र नास्ति किमीदृशा भेदेन।

कथन्तर्हि नीलमानयेति पीतस्यानयन न क्रियते। तदा तस्य पीतस्याप्रतिभा-सनमेव तेन नानीयते। यत्तु पुनरवियुक्तं नीलं तत्तु चोदितमेव। ज्ञाननिवेशि च वियुक्तं। न तदन्यथा (c 89a)नेतु शक्यं। भेदव्यवहार स्त्वन्वयव्यतिरेका-भ्यामतात्विक एवेति प्रतिपादित।

तस्मादर्थस्य दुर्व्वारं ज्ञानकालाव[14]भासिनः ।
ज्ञानादव्यतिरेकित्वं

अभिन्नयोगक्षेमत्वादेकत्त्वमर्थस्य ज्ञानेन दुर्व्वारं नहि वारयितु शक्यमिति साकारं ज्ञानं सिद्ध । एवन्तर्हि ज्ञानमेव केवलं दृश्यते नार्थं । तस्यापि दर्शने नीलाद्याकारद्वयसम्वेदन तस्यापि ज्ञानकालावभासने पुनरर्थस्यादर्शनमित्याकारा-न्तराक्षेपेऽनवस्थानादसमञ्जसम्भवेत् ॥[15] 16a

अत्र परिहार. ।

हेतुभेदानुमा भवेत् । (३८९)

नीलाकार ज्ञान दृष्टवत· केनचिदत्र हेतुना भवितव्यमिति तदनुरूपो हेतु-रनुमीयते न तु साक्षादसौ प्रतीतिविषय. । पूर्व्वोक्तविरोधदोषात् । कथमत्यन्ता-परिदृष्टस्यानुमानमपीति चेत् । तदाह ।

अभावादत्तबुद्धीनां सत्स्वप्यन्येषु हेतुषु ।

सामान्यतोदृष्टमनुमान व्यतिरेकमात्रप्रवर्त्तित । तथाहि । चक्षुरालोकमनस्कारेषु[1] सत्स्वपि न भवति । स्तम्भशून्याभिमते स्तम्भाकारमक्षविज्ञानमन्यत्र झटित्येव भवति ततो ज्ञायतेऽन्येन केन चिदत्रवस्तुना भवितव्यं । यदभावादन्यत्राभावः । स तथा भूतोर्थः प्रमेयो बाह्यो दर्शनोपाधिरहित एव ज्ञायमानः । स तर्हि कथं प्रत्यक्षस्य विषय. । (c 89b) तदाकारस्यप्रत्यक्षविषयत्त्वादन्या गतिर्न्नास्तीत्यु-पचाराद्विषयता । एवं तर्हि बाह्य एवार्थ प्रमेयः । न सम्वेदनमात्र[2]मिति । नात्र स्थितपक्षतेति दर्शयति ।

नियम यदि न ब्रूयात्प्रत्ययात्समनन्तरात् । (३९०)

किमाकारभेदजनकोऽन्योर्थः परिकल्पनीयोऽथ समनन्तरप्रत्ययविशेष एव कश्चित् । तत्रात्यन्तापरिदृष्टार्थकल्पना न साध्वी गत्यन्तराभावादेव परिकल्प्यते । यदा तु परिदृष्टपूर्व्वदर्शनसामर्थ्यादेवायमाकार उपपन्नस्तदार्थकल्पनावैयर्थ्यं । दृष्टानुसारेण च कल्पना भ[3]वति नान्यथा । न ह्यदृष्टं कल्पयितुं शक्यं । दर्शनानु-सारिण्यो हि कल्पना दृष्टा इत्यन्यथाकल्पनमशक्य ।

ननु च बाह्योप्यर्थो दृष्ट एवाकारजनकः । यथा पिण्डाकारता वृक्षमन्तरेण न भवति । न तत्रापि वृक्ष एव जनक इति केन दृश्यते । न । तेनैव तस्याज्ञानाकार-त्वात् । अन्येन नरेण दृश्यत इत्यत्र विचारितः तेनैव । पश्चाद्दृश्यत इति चेत् । यदि नाम तेन पश्चाद्दृश्यते पूर्व्वमस्तीति कु[4]तः । पश्चाद्दर्शनादेवेति चेत् । यदि

नाम पश्चादुपलभ्यते पश्चादेव भवतु । नहि सोपलब्धिः पूर्व्वत्र व्याप्रियते। सा ह्युपलब्धिर्ज्ञानाकारस्यैव नार्थस्य. ततस्तत्राप्यर्थोस्तीति पश्चादुपलब्ध्या निश्चय· । तत्रापि पश्चादित्यपर्यवसानादप्रतिपत्तिरेव । तस्मादर्थस्यादर्शना (c. 90a) द्वासनाप्रतिबद्धत्वस्य च प्रागेव साधितत्वात्समनन्तरप्रत्ययशक्तिरेव क[5]ल्पनीया नियमहेतु सूक्ष्मेक्षिकाक्रमेण । यदि तु कश्चिदेव न व्युत्पन्नस्तस्य हेतुभेदानुमानाद् बाह्यप्रमेयत्त्व ॥

ननु बाह्यार्थमन्तरेण कार्यकारणभावः कथ ज्ञाप्यज्ञापकभावश्च । तथाहि ।

बाह्यार्थमन्तरेण स्यात्कार्यकारणता विदाम् ।
तासाञ्च नियमाभावान्न कार्यन्न च कारणम् ।

तथाहि ।

नीलावभासात्पीताभ ततो नीलावभासवत् ।
एवमन्योन्यहेतुत्त्व कार्यकारणयो कथ ।

नीलावभासविज्ञानानन्तरं पीतावभास यदा भवति वि[6]ज्ञान तदा पीतावभासव्यतिरेकेण पीतस्याभावान्नीलावभासमेव तस्य कारणन्न पीत । न च तत्र नियम । तत· पीतावभासादपि नीलावभास. । अन्योन्यहेतुर्न्न युक्तिविरुद्धा[?द्धः] स्यात् । कथ हि कार्यकारणयोरन्योन्यहेतुता । बाह्यार्थत्त्वे तु नीलमेव तत्र कारण । पीतप्रतिभासस्तु समनन्तरप्रत्यय एव । समनन्तरप्रत्ययश्चार्थसहकारिभेदाद्भिद्यमानो नैकतामाप्नोति । येनानियमो भवेत् । अथवा बोधरूपताया समनन्तरप्र[7]त्ययस्य व्यापार. । आकारे तु नीलादेरेव तत्र च नियमान्न दोष. यदि बोधरूपादन्यतोपि बोधरूपता नीलादन्यतोपि तदाकारता भवेदनियम. ।

ननु शुक्लादपि शङ्खादेः पीताकारतोपलभ्यते सूक्ष्मादपि (c 90b) महाकारता· ततोऽत्राप्यनियम एव ।

नैतदस्ति । यत· ।

भ्रान्तसन्ततिभावित्वात्तत्रेदमसमञ्जस ।
अभ्रान्तप्रतिषेधे तु नियमान्नापरा गति ।

भ्रान्तेर्यदसमञ्जसदर्शन तदप्रामाणिकमेवेति न तेन व्यभिचारः । तथा बीजादंकुरस्य ज[8]न्मेष्यते न विपर्ययेण (।)

विज्ञानवादिनान्तु न बीजादिप्रतिभासादपरं बीजादिकं ततो बीजप्रतिभासादङ्कुरस्य ततोपि बीजप्रतिभासस्येति न नियमः । तथा च व्यवहारोच्छेदः । ज्ञाप्यज्ञापकभावश्च दूरोत्सारित एव । धूमादग्निरस्तीति साध्यते । परोक्षश्चानुमेयः ।

न च बाह्योग्निरग्निप्रतिभासश्च ज्ञानात्मकत्वादपरोक्ष एव। न च परप्रतिभासः साध्यते तत्र व्यभिचारात्। भाविनः स्वप्रतिभासस्यैवानुमानमिति चेत्। न (।) नियमाभा[9]वात्। तस्माद्बाह्यार्थवाद एव साधीयान्।

अत्रोच्यते।

बीजादङ्कुरजन्माग्नेर्धूमात्सिद्धिरितीदृशी।
बाह्यार्थाश्रयणीयापि कारकज्ञापकस्थितिः॥ (३९१)
सापि तद्रूपनिर्भासास्तथानियतसङ्गमाः।
बुद्धीराश्रित्य कल्पेत यदि किं वा विरुध्यते॥ (३९२)

प्रतिभासेनैवात्र प्रयोजनं नार्थेन। अप्रतिभासमानस्य सतोप्यसदविशेषात्। तथाहि। उपलम्भ. सत्तोच्यते। तथाहि।

अन्तरेणापि बाह्यत्त्व प्रतिभासो न दुष्यति।
विना तु प्रतिभासेन बाह्य बाह्य[10]सदा (C 91a) भवेत्।

प्रतिभासो हि बाह्यमन्तरेण भवतीति प्रतिपादितं। प्रतिभासमन्तरेण बाह्यमसदेवानुपलब्धेः। ततो बीजप्रतिभासादङ्कुरप्रतिभास इति कार्यकारणभावे को विरोधः।

केवलेन तर्हि नाङ्कुरप्रतिभासेन भवितव्यं। केवलप्रतिभासे हि बीजप्रतिभासाभावे (ऽ)भावादहेतुका स्यात्। बाह्यार्थवादिनान्तु नाहेतुकता। सुप्रतिभासमानस्यापि बीजस्य भावात्। तथा हि।

बाह्यस्याप्रतिभासेपि बाह्यता नाव[11]हीयते।
विजानता तु नास्त्येव यदा न प्रतिभासन।

अथ परप्रतिभासस्तत्रास्ति ततो नाहेतुकता। न. नियमाभावात्। न च परप्रतिभासात्स्वप्नप्रतिभासोदयः। तदपि समानं(।)यत·।

यदि कस्यचिदप्येष नैवान्य प्रतिभासते।
तदस्तित्त्वे प्रमाण कि येन तद्धेतुकोऽङ्कुर।

सर्व्वसामर्थ्योपाख्यालक्षणं हि नि रुपा ख्य। पश्चाद्दर्शनादस्तीति चेत्। उक्तमुत्तरं। कार्यतो ज्ञायतेऽस्तीति चेत्।

कार्यकारणभावे[12]हि सिद्धे सत्तास्य गम्यते।
सिद्धायान्तस्य सत्ताया कार्यकारणता भवेत्।

तत इतरेतराश्रयदोषादसिद्धिरेव। अर्थैकत्वारोपादसावपि दृष्ट एव।

ननु विज्ञानेप्यारोपः केन वार्यते। विज्ञानस्याभावात् कथमारोपो बाह्येपि समानमेतत्। बाह्यमप्यारोपादेवास्तीति व्यवह्रियते। तथा च। प्रतिभासोपि सम्वृत्यास्त्येव। न ह्यनुमानकालभाविनो बाह्यस्यारोपादपरमस्तित्व। (c 91b) एवञ्चासा[13]वारोपो यदि कश्चिदत्र भवेत् भवेदग्निर्दृश्यमानः। एवञ्च यदि कश्चिदत्र भवेत् भवेदेव प्रतिभास·। अर्थः सप्रतिभास इति चेत्। अन्योऽर्थ इति समानमेतत्। तत्राप्येकत्त्वं न परमार्थत । वि ज्ञा न वा दे पि तैमिरिकद्वयद्विचन्द्रदर्शनवदेव च व्यवहारोऽन्यत्र च। तस्माद्विज्ञानवादेपि तद्रूपनियतप्रतिभाससङगमाद् बुद्धीराश्रित्य यदि कार्यकारणभाव· को विरोध·। बाह्यार्थवादे[14] तु विरोध इति प्रतिपादित प्रमाणाभावात्। किञ्च।

यदि बाह्य भवेन्नित्य पश्चादेव प्रतीयता ।
पूर्व्व प्रतीतौ सर्व्वस्य सर्व्वाकारप्रतीतता ।

यदि बाह्यमग्न्यादिकं नित्य तस्यैकाकारा प्रतीतिः प्रागेवेति किमर्थमनुमानात्प्रवर्त्तते। अथानुमानेन स्वरूपं न प्रतिपन्नमेव तथा सति कथमस्य सत्त्वप्रतीतिः। पररूपेण प्रतीतिर्व्विज्ञानस्वरूपस्यापि समानैव। अर्थकल्पना दृश्यविकल्पार्थै[15]- 16b
कीकरणेन प्रवृत्ता तदध्यारोपयति। किन्तेनाध्यारोपितेन। अन्यथा तदभावे पश्चादर्थो विच्छिन्नोदयो भवेत्। कथन्तमन्तरेण विच्छिन्नस्य भावः। यद्यविच्छेदकल्पनया प्रयोजनं वासना मध्ये भविष्यति। तथापि विच्छेद एव वासनाया.। तद्रूपताऽभावादिति चेत्। अर्थेप्येवमभ्युपगम्यमानेन तद्रूपता (।) नहि दृष्टमदृष्टेन समानं शक्यं प्रत्येतुं। (c 92a) आरोपमात्रमेव तु केवलं। तद्विज्ञानवादिनामपि समानम्।

ननु विजातीयविज्ञानात्मिका वासना मध्यवर्तिनी कथन्तया तदविच्छिन्न।

यथा लाक्षावसेकस्य विजातीयान्तरोदये (।)
लाक्षाफलेनाविच्छेदो लोकस्याभिमत तथा ।।
अन्तराले विजातीयविज्ञानचयसम्भवो (।)
तद्वा(वा)सनानुगमादेव न विच्छेदो भविष्यति ।।

तथा लाक्षारसावसेकोऽन्तरालपातिषु बीजाङकुरपत्रनाडादिषु शक्तिविशेषं फलानुमेयमादधानो न विच्छिन्नं जनय[2]तीति लोके व्यपदिश्यते। तथा पूर्व्वकोपि पावकप्रतिभासः पर पावकप्रतिभासमन्तरालपातिषु विजातीयप्रतिभासेषु स्वशक्तिमप्ययँस्तदारूढ इवाविच्छिन्नमेव फल जनयतीति व्यपदिश्यतां अध्यवसीयतां वा। तेन स एव पूर्व्वकः प्रतिभासो जनयति पावकप्रतिभासं न धूमप्रतिभासः। तत्र यथा बाह्यार्थवादिनोऽग्निप्रतिभासात्पाश्चात्यात् कल्पयन्ति पूर्व्वमग्निरासीदिति।[3] तथा विज्ञानवादिनो वासनासीदिति नानयोर्विशेषः ।

धूमप्रतिभासादपि धूमवासना परिकल्प्यते वासनायाश्च कारणत्त्व प्रसाधितं तत्तु बाह्यस्य कारणतावदुपपत्तिमान्। प्रतिपादितञ्चैतत्।

अनग्निजन्यो धूमः स्यात्तत्कार्यात्कारणे गतिः।
तस्य कारणतायाम्वा कुत एकान्ततो गतिः॥ (३९३)

यदि धूमवासनात एव प्रतिभास स एव धूम स एककार्यकारणभावाभाव.। (c 92b) न ह्यग्ने[4]र्धूमस्तदा भवेत्। स्ववासनाप्रतिबद्धत्त्वात्। अथाग्निप्रतिभासोपि तद्वासनाप्रबोधानुगुणत्त्वेन धूमप्रतिभासकारणत्त्वात्कारणं। तथासति धूमोपि कारणमग्ने.। कारणतायाञ्च कुत एकान्ततो गतिर्व्यभिचारात्।

अत्रोच्यते।

तत्रापि धूमाभासा धीः प्रबोधपटुवासनां।
गमयेदग्निनिर्भासां धियमेव न पावक। (३९४)

धूमाभासा हि बुद्धिरग्निवासनाप्रतिबद्धा ततः सा वासनानुमी[5]यते सा वासना प्रबोधाभिमुखत्त्वादग्निप्रतिभासं जनयतीति पावकप्रतिभासप्राप्त्या प्रमाणम्। तद्यथा बाह्यार्थवादिनामग्निरनुमितोऽग्निप्रतिभासमग्न्यन्तरम्वा तत एव सामग्र्यधीनाग्निप्राप्तिः। एव वासनाधीनो धूमभाव्यग्निप्रतिभासः। परोक्षेतरयो. पावकयोरेकत्त्वमेवेति चेत्। न (।) प्रमाणाभावात्। वासनाबलादेव एकत्त्वमिति। वासनैव परमार्थत[6]एका. न वस्त्विति प्रतिपादितं। अपि च. बाह्येप्यर्थे नाग्निरनुमीयते। अपि तु भावी प्रतिभास एव। तदर्थत्वात्प्राणिना। न ह्यप्रतिभासमानेनाग्निना कस्यचित्प्रयोजनं। प्रतिभासान्वितायाञ्च भावी प्रतिभासो भवत्वनुमीयमानः किमग्न्यनुमानेन। कथम्भाविन्यनुमानमिति चेत्। एवमेव दृष्टत्त्वात्।

दृष्टत्त्वाददमेवेति (c 93a) नायुक्तमिदमीक्ष्यते।
बाह्ये त्वर्थे न सम्वादो[7] न च दर्शनसम्भव।

प्रतिभासेनैव भाविनाऽनुमीयमानेन सकलं समञ्जसं॥ बाह्ये तु स्वप्नस्यापि न सम्भवः। तथा हि।

तथा भाव्यर्थसम्वित्तिरनुमानात्सुनिश्चिता।
वर्तमानार्थवित्तिस्तु नास्तीति प्रतिपादित।

अन्यथा भाव्यर्थापेक्षया न कश्चित्प्रवर्त्तेत। अथ वर्त्तमानभाविनोरेकतामवसाय प्रवर्तते। तथा सति भाव्यर्थवित्तिरेवासौ न प्रवर्त्तमानवित्तिः। प्राप्त्या हि वेदनस[8]त्यतानुमीयते। ततो वर्त्तमानरूपस्याप्राप्तेर्भाविनश्च विपर्ययादावि(व)

विषयमेव प्रमाण। वर्त्तमानभावस्तु सन्नपि तत्रासत्यः। प्रत्यक्षमपि भाविन्येव प्रमाणं। तथा च प्रतिपादितं।

ततो यदुक्तं भविष्यञ्चैषोऽर्थः न ज्ञानकालेस्तीति तन्निराकृतं। भविष्यता विना न भवतीति तत्संप्रयोगजं प्रत्यक्षं प्रमाणं (।) तत इदमपि प्रत्यक्षमनिमित्तं विद्यमानो[9]पलम्भनत्त्वादिति तस्मात्प्रत्यक्षानुमानयोर्भाविविषयत्त्वात्तदन्वयव्यतिरेकानुविधानभावात्प्रमाणता। परमार्थतः सकलं स्वरूपविषयमेव। व्यवहारतोऽर्थविषयता। स भाव्यर्थः प्राप्तिविषय इति तस्यैवार्थक्रि(या)कारित्वादर्थत्त्वं। यदि व्यवहारोऽङ्गीक्रियतेऽर्थविषयतैव प्राप्ता। स च (c 93b) वर्त्तमान एवार्थ इति किम्भाविविषयता प्रतिपाद्यते।[10]

अत्रोच्यते।

त्रिविधो व्यवहारोयमव्युत्पन्नादिभेदत ।
तदाश्रयेण सकलमिद युक्तमिवेक्ष्यते ॥

अव्युत्पन्नानां व्यवहारो वर्त्तमानार्थविषयं प्रत्यक्षं। व्युत्पन्ना(ना) भाविविषय। अतिव्युत्पन्नानां प्रतिभासमात्रविषयमेव। तद्यद्यव्युत्पन्नजनापेक्षयाऽर्थविषयता वर्त्तमाने चार्थे सिद्धं साध्यते। एवमेव वयमप्यास्म। तस्मा[11]द्धूमप्रतिभासं विज्ञानमग्निवासनामेव गमयति। सा च वासना भाविप्रतिभासैकतया प्रतीयमाना तद्रूपप्रतिभासे प्रवर्त्तितेति स एव भाविप्रतिभासो गम्यते भाव्याग्निव द्वा ह्या र्थ वा दि मते। ततः परमार्थतः प्रतिभास एव विषयः।

ननु यदि पश्चादपि भ्रान्तः प्रतिभासो भवति न तत्रार्थत्त्वं।

अर्थ एवार्थिता लोके प्रतिभासे[12] त्वनर्थिता।
नहि स्वप्नसुखाद्यर्थो लौकिक कश्चिदीप्स्यते ॥

तदसत्। यतः.

वासनादार्ढ्यमासाद्य यदि नाप्रतिसन्धिमत्।
तत्स्वप्नसुखं स्याद्वा तत्र काक्षतिरस्ति व ॥

यत्र वासनाविशेषत एव विघटनं तत्स्वप्नसुखमेव न भवति। वि ज्ञा न वा दिनामपि स्वप्नेतरविभागोस्त्येव वासनाविशेषात्। यथा स्वप्न एव प्रबुद्धेतरविभागः। स्वप्नविशे[13]ष एव (c. 94a) वा भवतु। तत्राप्यर्थिता भविष्यति. अविदर्थानां कात्र वः क्षति। परमार्थतो विदश्च चूडोत्तमरत्नालंकाराणां तु मोक्षकामानां बालक्रीडावत्. अनभिमतमेव सकलं सुखमिति प्रवर्त्तनाभावासक्तिः सिद्धसाध्यतैव। तथा हि।

मोक्षकामा क्षमावन्तो न ससारसुखार्थिन ।
वृत्तिर्द्धर्मे ततस्तेषा तद्व्यावृत्तिप्रसिद्धये[14] । 17a

बालक्रीडामिव सकलमेव संसारसुखार्थं धर्मसाधनमुत्पश्यतां मोक्षाक्षिप्त प्रेक्षावता संसारव्यवहारविडम्वनाव्यावर्त्तनाय धर्मे प्रवर्त्तन। ततः सांव्यवहारिक प्रतिभासविषयमेव प्रमाणं। यदि तर्हि वासनाप्रतिबद्ध एव पावकादिप्रतिभासः स च सजातीयवासनाप्रतिबद्ध एव ततो धूमप्रतिभासात्तद्वासनैव गम्यता। कथमग्निवासनागतिः। यतः।

वासना खलु यद्रूप[1]प्रतिभासप्रवर्तिता ।
तद्रूपप्रतिभासस्य हेतुर्न्नान्यावभासने ।

नाग्निवासना धूमप्रतिभासं जनयति। धूमवासनयैव तस्य जन्यत्वात्। ततो नान्यजन्यमन्यङ्गमयत्यजनकं।

अत्रोच्यते।

तद्योग्यवासनागर्ब्भ एव धूमावभासिनी।
व्यनक्ति चित्तसन्तानो धियं धूमोग्निस्ततः ॥ (३९५)

चित्तादेव सकलसंसारप्रपञ्चोदयः। ततोग्निप्रतिभासजननयोग्यवासनासनाथचित्तसन्तानादग्नि[2]प्रतिभासः। स च सन्तानो धूमप्रतिभासं जनयति धूमवासना प्रबोधकचित्तान्तरो(c. 94b)पस्कारतः। ततो धूमवासना धूमाभासस्योपादानकारणमस्ति वासनासहकारिणी। अग्निप्रतिभासस्यापि भाविनः पावकवासनोपादानकारणं धूमप्रतिभासः। प्रबोधकत्वात्सहकारिकारणं धूमवासना च। तत एकसामग्र्यधीनत्वाद् गम्यगमकभाव. पावकतत्कार्यधू[3]मयोरिति समञ्जसं।

नन्वेकसामग्र्यधीनत्वेन गमकत्त्वे समानकालयोरेव गम्यगमकभावोनागतस्य न गतिर्व्यभिचारादिति।

सदितरदेतत्। यतः।

अनागतस्य गम्यत्त्व सर्व्वत्रैव(प्र)साधित ।
धूमादग्निरपि प्राप्यो गम्यते लक्षणेन कि ॥

भाविन एव प्रमाणविषयता। यदि हि धूमादग्निस्तदैवास्तीति गम्यते। न तु पश्चाद् भविष्यति तदा प्रमाणं न किञ्चिद् भवेत्[4](।) नहि तत्कालभाविना तस्य वह्निना प्रयोजनं। भाविनः सचेह एवेति चेत्। कथं प्रमाणं (।) अर्थदर्शनात्प्रमाणम् (।) नहि प्रमाणेन प्रति(प)त्तुरेव कालान्तरेर्थो दर्शनीयः।

ननु तेन दृष्टेनाप्यर्थक्रिया न क्रियत इत्यनर्थ एवासौ। भाविनोऽर्थक्रिया-सम्भवात् असावप्युपचारादर्थक्रियाकारी। कारणे कार्योपचारात्। यद्येवं विज्ञानवादिनामपि तत्काले वासनागम्यतास्त्येव। अर्थक्रियाकारित्वाभावात्[5] (।) किन्तयेति चेत्। अर्थेपि समानमेतत्। भाव्यर्थद्वारार्थक्रियाकारित्वा (C 95a) त्तस्याप्यर्थकारितेति वासनायामपि समानमेतत्। अर्थोपि तत्काले वासनामात्रगम्य एव। अर्थेन गम्यते चेत्। वासनाप्यर्थेन गम्यत एव। नहि वासनायामपि परस्य व्यवहारतो न गतिः। तस्मात्समानमनुमानं बाह्यार्थविज्ञप्तिमात्रवादिनो.। तस्माद्विज्ञप्तिमात्रमेव युक्त ॥०॥

कथन्तर्हि बाह्येप्यर्थे आचार्येण द्विरूपता वि[6]ज्ञानस्योक्ता विज्ञानवाद एव युक्त.।

अत्रोच्यते।

अस्त्येष विदुषाम्वादो बाह्यं त्वाश्रित्य वर्ण्यते।
द्वैरूप्य सह सम्वित्तिर्नियमात्तच्च(स्य)सिध्यति ॥ (३९६)

बाह्यार्थाभ्युपगमेन परापेक्षया द्विरूपता (भ)वन्मते, विदुषान्तु विज्ञानवाद एव। सम्विन्नियमो हि भिन्नयोर्न्न युक्त इति प्रतिपादितं। यदि च निराकार भवेद्विज्ञान तदाकारोऽन्य एव तदा ग्राहकाकार. पृथगेव गृह्येत कदाचित्। गृह्य[7]त एव नीलव्यतिरेकेण पीते स एवाकार.। तदेव नील सुखाकारेण तदेव दुःखाकारेणेति चेत्। न.

स एव ग्राहकाकार पीताद्योपि स एव य ।
पूर्व्वं दृष्ट इद ज्ञान प्रत्यक्षमनुमाथ कि ।

तदा प्रत्यक्ष, पूर्व्वापरभावे प्रत्यक्षस्यावृत्तेः। तदभावेनानुमानमिति न प्रमाणविषयः पौर्व्वापर्यं। कथन्तर्हि। अन्वयव्यतिरेकग्रहणासमर्थत्वात् प्रत्यक्षस्य अन्यत्राप्यग्न्यादावनुमा[8]न। (C 95b) न सामान्यविषयत्वादनुमानस्य एकपरामर्शविषयमेकमभिप्रेत्यानुमानं यथाव्यक्त्यन्तरेण सह महानसेतरप्रदेशवर्त्तिनी। एकत्त्वमारोप्य स एवाग्निरिति साध्यते। न. परमार्थत एकत्त्वमेव। एवमत्रापि स एव ग्राहकाकारस्तदेव च नीलमद्यापि तद्व्यतिरेकेणास्त इति सन्तानभेदमभ्युपगम्य ग्राह्यग्राहकयोर्भेदः साध्यते बोधरूपनी[9]लाकारयोर्व्वा। ततो वस्तुनि न भेदोऽपि तु प्रज्ञप्तिसति सामान्येन सन्ताने. परमार्थसत्यन्तु स्वलक्षणमपेक्ष्य सहोपलम्भनियम एव। ततोऽभेद एव परमार्थः। यदि च निराकारं विज्ञानं तदा तदेव शुद्धं सर्व्वदा भवेत् न पटुमन्दाविलादिरूपं। अन्यथापि च भवति। तथा हि.

ज्ञानमिन्द्रियभेदेन पटुमन्दाविलादिकम् ।
प्रतिभासभिदामर्थे बिभ्रदेकत्र[10]दृश्यते ॥ (३९७)

कथमेकत्रैवार्थे नानाकारता। यतः।

अर्थस्याभिन्नरूपत्त्वादेकरूपं भवेन्मनः ।
सर्व्वं तदर्थमर्थाच्चेत्तस्य नास्ति तदा भि[?त्म]ता ॥ (३९८)

यदि निराकारम्विज्ञानं तदार्थ एव ग्राह्य प्रतिभाति चैकाकार एव ततः प्रतिभाति स चैकाकार एव ततः प्रतिभासस्य भेदो न स्यात्। नार्थस्य नानाकारतेति प्रतिपादितं।

नन्वर्थाकारतायामपि (C 96a)नानाकार[11]ता कथन्तदैकाकारेणैव ज्ञानाकारेणापि वाच्य। ततो नानाकारता दोषस्तदवस्थ एव। न दोषो यत.।

अर्थाश्रयेणोद्भवतस्तद्रूपमनुकुर्व्वतः ।
तस्य केनचिदङ्गेन* परतोपि भिदा भवेत् ॥ (३९९)

तदाकारतोदयप्रसङ्गेऽर्थादन्यतोपि तदाकारता यथा चन्द्राकारतायां तिमिरादिबलात् द्व्याकारता॥

तथा ह्याश्रित्य पितरं तद्रूपोपि सु[12]तः पितुः ।
भेद केनचिदङ्गेन कुतश्चिदवलम्बते ॥ (४००)

नहि सुतः पितुः सदृग उत्पद्यमानो मातुः परमप्याकारं न धत्ते। इन्द्रियभेदेन भेदमेव दर्शयति।

मयूरचन्द्रकाकारं नीललोहितभास्वरं ।
संपश्यन्ति प्रदीपादेः मण्डलं मन्दचक्षुषः ॥ (४०१)

नीलाद्याकारभेदभिन्नं भास्वरं सपरिवेषं प्रदीपं पश्यन्ति तिमिरम[13]न्दीकृतनयनशक्तय। अथ तथाभूतमेव सत्यतः प्रदीपरूपं तदा।

तस्य तद्ग्राह्यरूपत्त्वे का प्रसन्नेक्षणेऽक्षमा ।

प्रसन्नेक्षणोपि पश्येत्। यदि वा सोपि प्रसन्ने क्षण एव नोपहतेन्द्रिय.। यतः।

भूतञ्च पश्यंस्तद्दर्शी कथञ्चोपहतेन्द्रियः । (४०२)

असत्यदर्शनाद्दर्शनमुपहतमुच्यते। सत्यदर्शनेप्युपघातकल्पनायां सकलस्तम्भा[14]दिदर्शनेप्युपहतलोचनाः कल्पनीयाः। तथा हि. न तावत्स्वरूपेण दर्शन-

---

* दर्शन—इति हे पुस्तके।

शक्तेरुपघातः प्रत्यक्षत· प्रतीयते ततोऽनुमाना(c 96b)त्कल्पनीयः। शक्तिश्च यथा कार्यदर्शनेन कल्प्यते। यथा कार्योपघातेनोपघातकल्पना तस्याः। कार्यं च दर्शनं। तच्च सत्यदर्शनमन्यद्वा। सत्यदर्शनेपि कल्पनेनानुपघातो वा[15] नाम. प्रथमं 17b तमप्यन्यादृश पश्यतीत्युपहतेन्द्रिय.। तथा सति॥

शोधितं तिमिरेणास्य व्यक्तं चक्षुरतीन्द्रियं।
पश्यतोव्या[?बा]ह्यदृश्येर्थे तदव्यक्तं कथं पुनः। (४०३)

यो हि अन्यादृश्यमपि पश्यति स कथमन्यदृश्यमस्पष्टं पश्येत्। नह्येवं दृश्यते। यो हि सूक्ष्ममन्यदृश्य परिस्फुटतरं पश्यतीति दृष्टं न चैवमतो न भूतदर्शीति युक्तं।

नन्वभूतं दृश्यते चेति[1] व्याहतं।

दृश्यमानमभूतञ्चेत्कथम्भूतस्य भू(त)ता।
न दृष्टि विरहय्यान्यद् भूताभूतनिबन्धन।

दृष्टमभूतमिति व्यवस्थाया भूतमेव नाम नास्तीति प्राप्तम्विशेषाभावात्। न दृष्टऽनुपपन्न नाम।

तदसत्।

येन रूपेण यद्दृश्यन्तत्तेनैवोपगम्यते।
अन्यथा दृश्यमा(न)न्तु गम्येत कथमन्यथा।

इन्द्रियविकारतिमिराद्यन्वयव्यतिरेकानुविधायितयोपलभ्यमानं तदपरका[2]रणोपपादितजन्मक सम्वेदनस्वभावाननुस्यूतमिति न युक्तं। तिमिरादिविकारानुविधानमेव च साध्यम्। तथापि बाह्यत्वाभ्युपगमे वचनमात्रकं। तथा हि।

आलोकात्समनस्कारादन्यस्यैकस्य (c 97a) गम्यते।
शक्तिर्हेतुस्ततो नान्योऽहेतुश्च विषयः कथं॥ (४०४)

आलोकादिव्यतिरिक्तस्य प्रदीपस्यैव परमुपलभ्यते शक्तिर्न्न मण्डलस्य ततो नापरस्य हेतुताभावाद्वि[3]षयता। नाहेतुर्व्विषय इति प्रतिपादित। प्रतिभासनादेव विषय इति न युक्तं। प्रतिभासस्य भ्रान्तस्यापि सम्भवात्। स्वरूपेण प्रतिभासमानं कथं भ्रान्तमिति चेत्। स्वरूपेण प्रतिभासमानं स्वसम्वेदनन्न विषयः स्यात्। अन्यत्र प्रतिभासमानेन स्वसम्वेदनमिति चेत्। स्वेन रूपेण प्रतिभासमानं कथमन्यत्र प्रतिभातीति युक्तं। यत्र हि प्रतिभास[4]ते तस्यापि प्रतिभासनेऽन्यत्रानवस्था। स्वप्रतिभासने तद्वदेवान्यस्यापि स्वरूपप्रतिभासनात् स्वसम्वेदनमेव। परस्परप्रतिभासने नीलादीनामपि परस्परप्रतिभासनात्सम्वेदनतैव। नीलादीनामपि सम्वेदननिवेशिनां सम्वेदन(ा)र्थभावनैवेति तद्रूपो हेतुरन्वयव्य-

तिरेकावधृतसामर्थ्यो विषयः। न चान्वयव्यतिरेकाभ्या सामर्थ्यविधा[5]रणं मयूरचन्द्रकस्य. ततो नास्य विषयता। सम्वेदनासीनरूपव्यतिरेकेण व्यवस्थापनासम्भवात्। स्तम्भादीनान्तु जाग्रदुपलब्धानामन्येन ज्ञानान्तरेण दर्शनाव्यतिरेकव्यवस्था तत्कार्यभूदाहदर्शनाच्च। अत्रापि समानतिमिरोप पूर्व्वैरुपलम्भ इति चेत्। न. तेषामपि समानत्वात्। नहि भ्रान्त्युपलब्धस्याग्नेर्भूमिभेददाहः कार्यमुपलभ्यते। ततो द्वयस्यापि[6] भ्रान्तता। अथ सोऽग्निरदाहक एव। न. तथा प्रतीत्यभावात्। अतथाभूतस्य तथा प्रतीतिर्भ्रान्तिरेव। लोकव्यवहारा(c 97b)पेक्षया भ्रान्ततेति चेत्। अर्थत्वमपि लोकव्यवहारापेक्षमेव। स्वरूपप्रतिभासनात्सर्व्व एव तथेति न विवेको युक्तः। तस्मादर्थक्रियाकार्यर्थोऽन्यो नेति न्यायः। सर्व्व एवार्थ. किन्नेति चेत्। सर्व्वमेव सम्वेदनमिति किन्नेष्यते। सम्वेदनता[7] व (?) च स्वसम्वेदनमेव सकलमिति कथमर्थता। परोक्षु सम्वेदनमिति चेत्। न. प्रमाणाभावात्। असम्वेदन कथमिति चेत्। न. दृष्टत्त्वात्। अर्थेनापि सम्वेद्यमान दृश्यत इति चेत्। किमत्रप्रमाण। भवतोपि किमिति चेत्। असम्वेदनमेवापरम्य।

ननु प्रकाशकाभावे कथमप्रकाशकस्य घटस्येव प्रकाशनमिति चेत्। न. प्रकाशताया· सिद्धत्त्वाभावा[8]त्। प्रदीपवदेव। घटस्य कथमिति चेत्। समर्थकारेवस्थानात्। तत्र रूपमस्तीति कुतः। एकसामग्र्यधीनस्पर्शादिदर्शनादन्येन च निशाचरादिना। परमार्थतस्तु नैवमिति. अस्मत्समीहितमेतत्। तस्मात्प्रदीपवत्स्वसम्वेदनमेव सकलं। तैमिरिकदृष्टाकारः। अपि च। यदि तस्य सामर्थ्यं चन्द्रकस्य चित्रपटवदेकदेशस्य प्रदीपरहितस्यापि दर्शनप्रसङ्ग। तथा हि।[9]

स एव यदि वा हेतुः किं प्रदीपमपेक्षते।

विततरूपस्य तदेकदेशो विनाप्येकदेशान्तरेण गृह्यते। तथैव हेतुरिति चेत्। न. रूपान्तरापेक्षयैव नीलादि गृह्यते। एवमुभयस्य हेतुत्त्वं कल्प्यते।

दीपमात्रेण सद्भावादुभयत्रापि कारणं। (४०५)

तद्देशपिधानेपि दीपमात्रसद्भावाद् भवतीति नोभयकारणा तद्दृष्टिः। (c. 98a) अथ तत्पिधातुमेवाशक्यमन्योदयादिति चे[10]त्। तदेव तर्हि तस्योदय इति नाप्रकाशरूपता। दृष्टिस्तत्र व्याप्रियते तेनास्वसम्वेदनमित्यसङ्गतं। दृष्टेः समानकालतया तत्र व्यापाराभावात्। अन्वयव्यतिरेकाभ्यान्तु तद्रूपव्यापारे तदेव जनितं प्रदीपेन प्रभावदिति स्यात्। यथा वा प्रदीपो निजहेतुत. सप्रभ· तथा चक्षुरपि पुरः परिस्फुरद्रूपसमन्वितमिति न दोष। प्रदीपाद्व्यतिरिक्तैव[11] प्रभेति चेत्। अस्तु व्यतिरेक· किन्तु न प्रदीपप्रकाश्या प्रभा प्रदीपवदेवेति प्राप्त। तस्माच्चक्षूरूपव्यतिरिक्तमपरमिह विज्ञान प्रमाणाभावादसत्। तदेव तु द्वय

स्वरूपसम्वेदनाधिष्ठितम् (।) सम्वेदनमिति तथाभूतसम्वेदनकारणमपरं परिकल्प्यतामिति सिद्धिरूपा बुद्धिः। यदि चार्थ एव पुरोवर्त्ती साकार एव विज्ञानग्राह्यः तदार्थः स्वरूपेण गृह्यत इति॥

दू[12]रासन्नादिभेदेन व्यक्ताव्यक्तं न युज्यते।
तत्स्यादालोकभेदाच्च तत्पिधानापिधानयोः। (४०६)
तुल्या दृष्टिरदृष्टिर्वा

अर्थ खलु दर्शनविषयसीमानमतिक्रम्य वर्त्तमानः स्वकारणपरम्परोपपादितान्यस्वभावपरित्यागानियतस्वभावसङगमात्स्वरूपत एवावभासते। कथमस्य दूरासन्नादिदेशतायामपि प्रतिभासनभेदो येन व्यक्तेतरस्वभावताप्रसङग·। दृश्यते चासावतो न (c 98b) बा[13]ह्यमेवाकारवता स्वभावपरिग्रहेणावभासि। नहि नियताविफलरूपावभासने, भेदभासनं तद्रूपभेदप्रसङगात्। प्रतिभासमानं हि पुरो रूपमर्थ एव तल्लक्षणत्वादर्थस्य। ततस्तद्भेदेऽर्थभेद एवाविफलः। न च भेदे ऽर्थस्य व्यक्तादिव्यपदेश.। नार्थान्तरप्रतिभासनेऽन्यदव्यक्तं नाम। तस्य च तदेव रूपं तच्च व्यक्तमेव।

स्तयैव तत्स्वरूपञ्चेत्पररूप कथन्तथा।
ताद्रूप्ये[14]ण प्रतीतेश्चेद्रूपभेदे कथ नु सा॥
अभेदेन प्रतीतौ हि प्रतीतेरस्तुभिन्नता।
अभेदे ग्राह्यरूपस्य पुनर्भेद कथ मत ॥

तस्मादेव हि दूरासन्नादिभेदादालोकस्यालोकनस्य वा भेदाद्वयक्तेतरभेद इति न सङगतम्। स्वरूपप्रतिभासनेतरविकल्पानतिवृत्तिः। आलोकभेदेपि यदि स्वरूपेणावभासते कथमव्यक्त नावभासते तथापि कथमिति न किञ्चिदेतत्।[15]
आलोकभेदे हि सोपरस्तत्र गृह्यतामर्थस्तु कथमव्यक्तादिरूपः। अथ दूरदेश- 18a
व्यवधानान्मन्ददर्शन। यदि दूरदेशव्यवहितन्तदापि हि तत्त्वान्न दृश्यत एव. तथा पिर्म्हितं ततः परिस्फुटमेव दृश्यतामिति कुतो भेदः॥

सूक्ष्मेहांश[? सूक्ष्मांश]स्तस्य कश्चन।
आलोकेन न मन्देन दृश्यतेऽतो भिदा यदि। (४०७)

दूरदेशतया हि सूक्ष्मांश एव व्यवधीयते न स्थवीयानाकारः। सूक्ष्मस्तु व्यवहितो दूरदेशतया न दृश्यत एव। (c. 99a) नन्वसाववयव्येक एव[1] महिम्नावस्थित.। ततः सकल एव परिदृष्ट इति कथमस्पष्टग्रहः। अथ न भवत्येकस्तदा सकल-सूक्ष्मतेति प्रतीतिरेव न भवेत्। भवन्ती वा परिस्फुटपरमाणुरूपग्राहिणी स्यात्। तदेव दर्शयति।

एकत्त्वे त्वस्य* बाह्यस्य दृश्यादृश्यभिदा कुतः।
अनेकत्त्वेऽणुशो भिन्ने दृश्यादृश्यभिदा कुतः। (४०८)

नन्वेकस्याप्यवयविनः सूक्ष्मावयवयोगात्तद्रहितग्रहणेऽपरिष्कृताकारता(, अ)न्यथान्यथाभावः।

तदसत्। यत. (।)

नील पी[2]त विना ग्राह्य कि तदस्फुटमुच्यते ।
अन्यस्याग्रहणेन्यस्य स्वरूपग्रहण स्फुटम् ॥

नन्वनेकत्त्वे तदन्यग्रहणं तदन्यस्याग्रहणमित्यपरिस्फुटता।

तदप्ययुक्त। तत्रापि समानत्वात्। यदन्यग्रहणे परिस्फुट तत्किमन्यरूपमथसम्वेदनस्य। यद्यर्थस्य तदन्याग्रहणेपि तदेवेति कथमपरिस्फुटता। अथ ततः सोत्पत्तिमती तदा तर्हि नार्थस्यासाविति कथमर्थग्रहः। तदापि सा तथा भवन्ती वस्तुन एव रूपमिति चे[3]त्। वस्तुरूपताया परेणापि तथैव दृश्येत। अदर्शने परेण प्रतिपत्तिरेव साऽसाधारणत्त्वादिति प्रतिपादितम्। तथा हि। प्रतीतिरेव मम व्यामलिनरूपोदितेति जन. प्रतिपत्तिमानथोपचारादेव प्रतीतिः॥ व्यामलिनार्थदर्शनात्प्रतीतिरपि तथाभूता व्यपदिश्यते यथा दण्डसङ्गात्पुरुष एव दण्डव्यपदेशभाक्।

(c 99b) तदप्यसत्। यत॰.

मम व्यामलिन चक्षुस्तद्वद्दर्शनसगमात् ।
तत्कार्यदर्शनादे[4]व व्यपदेशस्तथास्तु स ॥
दृष्टेस्तु कार्यन्नास्त्यन्यत् न ह्यर्थ तस्यकार्यतास्ति(।)
तथा समागमादेव यदि नीलादिसोच्यता ।
कथ कमेय दृष्टिर्हि न कदाचित्त्वयेष्यते ।
तस्मादस्पष्टता दृष्टे सर्व्वलोकप्रतीतित ॥
निश्चयो हि न सर्व्वेषामकस्माद् भ्रान्त उच्यते ।

नहि व्यवहारमस्खलितमादधानो व्यवसायोऽन्यथा संभाव्यते। ततः स्वयमर्थप्रतिभासेन बुद्धिभेदो युक्तः।

मान्द्यपाटवभेदेन[5]भासो बुद्धिभिदा यदि।
भिन्नेन्यस्मिन्नभिन्नस्य कुतो भेदेन भासनं। (४०९)

अपरः प्राह। आलोकस्य बाह्यस्यैव मान्द्यपाटवभेदाद्बुद्धिभेद एकस्मिन्नर्थे न तु बुद्धिस्वभावभेदः, स्वत इति नासावाकारश्चेतसः। तदनुपपन्नं। यतः।

---

* हे पुस्तके—एकत्त्वेर्थस्य।

अर्थस्य प्रतिभासः स्याद्यदि भासा समन्वितः ।
अन्येन सहिताभासे न स्यान्मन्दावभासिता ।।

परस्परव्यावृत्तालोकरूपप्रतिभासे हि तयोरेव तथावभासनमिति नास्पष्ट-रूपप्रति[6]भासः । न खल्वन्यस्मिन् स्वरूपावभासवति तदपरः तथा भवति। भवत्येव कुसुम्भरागवस्त्रान्तरितवस्तुप्रतिभासवदिति चेत्। न। तत्रापि समानत्वात्। स्वरूपेण प्रतिभासनेन रक्ततावभासः। तदेव तस्य रूपमिति तथावभासनाभ्युपगमे तस्याप्यालोकमन्दतया तदेव रूपमिति सकलस्य तथावभासनात्कुतो बुद्धिभेदः । तस्मादालोकभेदेपि न भेदावभासः। अपि च।

मन्दन्तदपि तेजः[7]किमावृत्तेरिह सा न किं ।
तनुत्त्वात्तेजसोप्येतद(c 100a)न्यत्राप्यस्य तानवं ।। (४१०)

यदि तेजो दवीयसि देशे रजसाऽऽवृतमिति मन्द तदाकाराद्देशमपि मन्दमेव तत्रापि रजसा तिरस्करणसम्भवात्। न खलु व्यापि नभस्वदुद्धूयमानमिह नास्ति(।) तदस्तित्त्वेपि तनुत्त्वाद्रजसोऽनावरणकारणता। दवीयसि तु देशे तदन्तरालायतत्त्वे न रजसो भूयस्त्वं। स एव गोधाशशकन्याय । तेजसोपि तत्र भयस्त्वमेव। निकटे तु[8] यथा रजसस्तानवन्तथा तेजसोपीति किमेवमुक्तेन।

अत्यासन्ने च सुव्यक्तन्तेजस्तत्स्यात्परिस्फुटम्* ।

यदि रजसस्तनुत्वेनालोकस्यामन्दतायां स्फुटप्रतिभासस्तदात्यासन्नताया रजसस्तनुतमत्त्वादतिपरिस्फुटम्भवेत् । तत्र शक्त्यभावादिन्द्रियस्येति चेत् । सर्व्वथाऽदर्शनमेव प्रसक्तमित्युक्त।

तत्राप्यदृष्टमाश्रित्य भवेद्रूपान्तरं यदि । (४११)
अन्योन्यावरणन्तेषां स्यात्तेजोविहतिस्ततः ।।

अदृष्टसङ्गितमचेतन पदार्थमा[9]श्रित्य रूपान्तरमेव तत्रोत्पन्नं तेन तत्तेज आवृतं विहितमिति न तदपरस्य दर्शनं। एव सति सर्व्वेण तदेकमेव दृश्येत नापरं तस्यावृतत्त्वादालोकस्य। द्वयमपि च दृश्यते निकटे तदावरण नास्त्येव तस्य पृष्ठतस्स्थानात्। नैकदेशस्यैव दर्शनात्। नहि दूरदेशवर्त्तिन(ो)निकटदेशावस्थितस्य पृष्ठतस्तदुपलभ्यते रूपमपरिस्फुटाभिमत। भ्रान्तिरसाविति चेत्। पदार्थतत्त्वदर्शनदर्शिना कुतो[10] भ्रान्तिसम्भवः। देशभ्रान्तिरस्त्येवादित्यस्य वृक्षशिरःसंसृष्टतादर्शनवत्।

(c. 100b) तत्र देशेप्यसत्तत्र दृश्येत यदि वस्तु तत् ।
तत्र कालेप्यसत्तत्र किन्न दर्शनसङ्गतम् ।।

---

*हे पुस्तके—त्स्यादतिस्फुटम् ।

तत्काले ऽविद्यमानस्य यदि स्यात् दृष्टिरागत ।
सर्व्वार्थदर्शिन सर्व्वं इति तच्च न दृश्यते ॥
अदृष्टसङ्गमादेतद्यदि सर्व्वं समर्थ्यते ।
परेणापि तत सर्व्वो दृष्टतो दर्शनोदय ॥

**यदाहि परदर्शनदूषणाय भवता किञ्चिदुच्यते। तदा परोपि सकलमेत[11]द् भवतो दूषणं प्रतिभाति न समर्थन। तथाभूतादृष्टसामर्थ्यादिवेति भवत एवाय दोष इति शक्त एव वक्तु। यथा च विद्यमानवारणमदृष्टतः तथा ऽविद्यमानोपदर्शनमपि। ततो ऽविद्यमानमेव भवतो दूषण प्रतिभाति। विद्यमानमपि न समर्थनं तथा प्राश्निकप्रपञ्चस्यापीति न कश्चित्तस्य वादी भवेत्।**

दृश्यते यद्यथा वस्तु तत्तथैवानुगम्यताम् ।
अस्फुटावरणन्तस्य पृष्ठतो नेति ग[12]म्यताम् ।

**कस्यचिदपि पृष्ठतस्तदावरणमिति पुरोवर्त्तिनावरणेनाविहितत्त्वादेकमेव स्फुटरूपमावरण सर्व्व. पश्येत्तस्या वा वरणे तु सकृदेव दूरदेशव्यवस्थितोपि स्फुटेतरलक्षणं द्वयमपि पश्येदिति प्राप्त सकृदेवेत्याह।**

तत्रैकमेव दृश्येत तस्यानावरणे सकृत्। (४१२)
पश्येत्स्फुटास्फुटं रूपम्

**अथाप्युच्येत। एक एव दृश्यते परदर्शनस्यादृष्टेन वारणे सतीति चेत्। अत्रोच्यते। यदि तत।**

एको दृष्टेनावरणेन* (।)

**न दृश्य[13]त इति वाक्यशेष.। तदयुक्तं।**

अर्थानर्थौ न येन (C 101a) स्तस्तदृदृष्टं करोति किं। (४१३)

**अदृष्टं हि नामेदं धर्माधर्मलक्षणं। अकस्मादर्थानर्थोपनिपातेन तस्य तेन प्रत्यक्षतः। तत्कथमनर्थेतरत्वाभावेपि दूरादर्शनस्यास्पष्टदर्शनस्य वा दृष्टकृतत्त्वे। एतदपि करोतीति चेत्। दत्तमत्रोत्तर। सर्व्वमेव दूषणमसमर्थन न तत्त्वतो भवेदिति। साधूक्तमपि न भवताऽवगम्यते ऽदृष्टबलादिति।**

तस्मात्सम्वि[14]द्यथाहेतुजायमा(ना)ऽर्थसंश्रयात् ।
प्रतिभासभिदां धत्ते शेषाः क्र(कु)मतिदुर्न्नयाः ॥ (४१४)

**किञ्च।**

---

* हे. पुस्तके—दृष्टेन वारणे ।

ज्ञानशब्दप्रदीपानां प्रत्यक्षस्येतरस्य व (?)।
जनकत्त्वे न पूर्व्वेषां क्षणिकानां विनाशतः ॥ (४१५)
व्यक्तिः कुतोऽसतां ज्ञानात

नाविद्यमानस्य स्वरूपेण दर्शनं। हेतुत्त्वेन च ज्ञानात्पूर्व्वत्त्व। पूर्व्वत्त्वे च क्षणिकतया न ज्ञानकालेस्तिता। अथ यदैवास्ति तदैव ग्रहण हेतुभावमन्तरेणापि। समानकालतयैव वा[15]हेतुतापि।

तदसत्। ज्ञानस्य य उपकारको न भवति तस्य ।

अन्यस्यानुपकारिणा।

व्यक्तौ व्यज्येत सर्व्वार्थः

न समानकालस्य हेतुता तथा ऽप्रतीतेः। असम्बद्धग्रहणे च सर्व्वमेव गृह्येत।

तद्धेतोर्न्नियमो यदि ॥ (४१६)

न सर्व्वग्रहणन्तद्धेतुनियतत्त्वाद् ग्राह्यग्राहकयो॰। ईदृशो ग्राहकश्चक्षुषा नियमितो येन प्रतिनियतमेव गृह्णाति। (C. 101b) ग्राह्यम्वा येन तेनैव गृह्यते। अथवोभयम[16]पीति परः । तदयुक्तं। यत॰।

नैषापि कल्पना ज्ञाने

न प्रतिनियतग्रहणमनया कल्पनया। हेतुनियमो हि पदार्थाना स्वरूपे कार्यकारणे च। न तावत्स्वरूपे. स्वरूपप्रतिनियमे हि कारणतः स्वरूपमेव तयोस्तथा भूतं यदवभासते। ततः स्वरूपावभासनमेव प्रसक्तं तत्पूर्व्वकारणाधीन न परस्पराधीनमिति न परस्परं ग्राह्यग्राहकभावः। समानकालोदयात्। यदधीना हि त[17]- 18b
योर्ग्राह्यग्राहकता तस्यैव तौ ग्राह्यग्राहकाविति युक्तं।* न च सविदितस्वस्वरूपादपरा ग्राह्यग्राहकता। कथन्तर्हि (—) ग्राहकोहं ग्राह्यंममेदमिति प्रतीतिः। न॰ तदपरस्य सम्बन्धस्याप्रतिभासनात्कल्पनामात्रमेवानादिवासनाधीनमेतत्। तथा चोक्तं। "सव्यापारमिवाभातीति"। तस्मात्तस्य रूपस्य स्वहेतुनियमान्न ग्राह्यग्राहकभावः। अथ कार्यकरणे स्वहेतुनियमः। तदापि यदि ताभ्यां प्रतिनियमस्य कार्यात्मनो जननं कथमि[1]व ग्राह्यग्राहकभावः। सहकारिभाव एव भवेत्। न च तावता ग्राह्यग्राहकभाव.। तस्मान्न हेतुतो ग्राह्यग्राहकभावः। अथवा. नैषापि कल्पना ज्ञाने ।। यदा ज्ञानं ग्राह्यं ज्ञानान्तरस्य प्रत्यक्षस्यार्थस्य वा तदा किं द्वयोर्ज्ञा-

---

* स्फुटमस्फुटम्वा दूरासन्नवर्तिना च सर्व्वेण—इति पक्तौ त्रुटितोशो बहि पक्ति लभ्यते ।

नयो· समानकालता। हेतोश्च ग्राह्यग्राहकतोदय । न च द्वयोः समानकालतेष्यते। समानकालतायाम्वा तदन्येनापि समानकालेन तदन्येनापीति·अपर्यन्ततैव ज्ञानानाम्भवेत्। अर्थस्या[2]पि तदा ग्रहणम्भवेत्। न चेष्यते। (c. 102a) न च प्रथमं ग्राह्यमसत्पश्चाद् ग्राह्यं भवति तद्रूपस्याप्रतिपत्तिप्रसङ्गात् । ग्राह्यरूपमेव प्रागपीति चेत्। प्रागपि ग्रहणप्रसङ्ग·। भवतु को दोष इति चेत्। न। प्रागपि ग्राहकप्रसङ्गात्। यदि च चक्षुरादिसामग्रीवसा [? शा] दुदयस्तस्य ज्ञानमेव ग्राह्याकार· स्यात् नार्थता। तथाप्यर्थत्त्वे ग्राहकाकारोपि भवेत्। अथार्थस्य प्राग्भावाद् ग्राहकस्य चान्यथाभावान्नैव। न प्रागभाव[3]: परिगृह्यत इत्युक्तं। कल्पनायां सर्व्वकल्पनाप्रसङ्ग इति च। कथन्तर्ह्यर्थकल्पना। अर्थदर्शनापेक्षयेति प्रतिपादितं। अत एवाह।

ज्ञानन्त्वर्थावभासतः।

त व्यनक्तीति कथ्येत तदभावेपि तत्कृतं॥ (४१७)

तदाकारावभासनात्। अविद्यमानोप्यर्थः प्रतिभातीति भवेद्व्यपदेशः। अर्थेन दृश्यमानोर्थः स्वयञ्चानुमानतः प्रतीतोस्तीति व्यवस्थितावर्थस्य ततस्तदाकारज्ञानोत्पत्तौ स गृहीत इति युक्त। तदभा[4]वेतूत्पन्न भ्रान्तिज्ञानमिति मिति (?) व्यवस्था। न तु पुन· परमार्थतो ऽनुमानमस्ति।

प्रत्यक्षपूर्व्वकं सर्व्वमनुमान प्रवर्त्तते। प्रत्यक्षस्यानुमानापेक्षा यद्यन्योन्यसमाश्रय·। न यावदनुमानं प्रमाणं तावन्न प्रत्यक्षं प्रमाणीभवति बाह्येऽर्थे। न च प्रत्यक्षप्रामाण्यासम्भवेऽनुमानन्तत्पूर्व्वकत्वादन्यथार्थपरम्परा भवेत्। (c 102b) तस्मात्परमार्थत· स्वरूपमेव सम्वेदनस्य सम्विदितं नार्थः। तथाप्यभ्युपगम्योच्यते। नहि[5] सर्व्वं तत्वत एव व्यवस्थाप्यते। ततः पूर्व्वमर्थे सति यदाकारं विज्ञानं जायते स ग्राह्यः।

नाकारयति चान्योर्थोऽनुपकारात्सहोदितः।

सहोदितोर्थात्मा स्वहेतोः तथैवोत्पन्न इति तदुपकाराभावात् ज्ञानस्य नासा ग्राह्यस्तदाकारज्ञानाजननात्। ततः.

व्यक्तोऽनाकारयन् ज्ञान स्वाकारेण कथम्भवेत्। (४१८)

परोक्षार्थात्मा तदाकारज्ञानजनकतया वस्तुतः स्वरूपेणाविदितस्वभाव इति तदाका[6]रज्ञानसम्वेदनादेव तस्य वेदनमिति युक्तं। तेन व्यक्तत्त्वं। स्वरूपेण प्रतिभासने तु स्वहेतुसामर्थ्यान्न समानकालता विना परेण तस्य किञ्चिदिति तद्वेदनं। यदि परन्तदुपरोधमात्रादेव। भवतु ज्ञानादीनामसतां ज्ञानकाले स्वरूपेणा-

वेदने ततस्तत्र सामर्थ्यात्तदाकारज्ञानकल्पनापि। य. पुनः स्थिरो वज्रोपलाविको-र्थस्तस्य स्वरूपवेदन कथमनुपपन्न।

तदपि यत्कि[7]ञ्चिदेतत्। यतः।

वज्रोपलादिरप्यर्थः स्थिरो योर्थानपेक्षणात्।
सकृत्सर्वस्य जनयेत् ज्ञानानि जगतः स्वयम् ॥ (४१९)

कालकलावता न व्यापी हि नित्य. स्थिर इति चोक्त·। यदि च तस्य एव स्वभाव-स्तदा तदाकारसर्व्वस्वस्वीकारसम्वेदने न सपर्यवसानः स परिगृहीत इति (।) एकज्ञानकाल एव परिसमाप्त (c. 103a) इति न नित्यता भवेत्। न तदैव परिसमाप्तं नित्यं नाम। सकलकालकलावलोकने च न का[8]लदैर्घ्यं। युगपच्च ग्रीष्मादिकः कालः स्यात्। ज्ञानैकत्त्वेप्ययमेव दोषः। ननु क्रमभाविकालकला-नामक्रमेण कथं ग्रहणम्। अग्रहणे तर्हि न कालव्याप्तिरस्येति कथं नित्यता। तस्माद्यद्यसावेकस्तथैव सकृत् गृह्येत। अथापरकारणापेक्षया परापरसम्वेदनजनने क्रम इति।

तदप्ययुक्तमनपेक्षत्वात्। न ह्येकरूपं स्वकारणादुत्पन्न तद्भावे परम-पेक्ष्यते। अथ पश्चादपरा दृश्य[9]मानता भवति। या. पश्चादेव विषयः। तदा तर्हि न नित्यत्त्वमित्याह।

क्रमाद्भवन्ति तान्यस्य सहकार्युपकारतः।
आहुः प्रतिक्षणं भेदं स दोषोत्रापि पूर्व्ववत् ॥ (४२०)

यदि सहकारिचक्षुराद्युपकारक्रमेण तानि विज्ञानानि क्रमभावीनि। तथा सति ज्ञानाना क्रमभावे तद्दृश्यतापि क्रमभाविनी। नहि दृश्यता ज्ञानमन्तरेण, वस्तुन स्वसम्वेदनप्रसङ्गात्। ज्ञानसमानकालभाविनी च दृश्यता न पूर्व्वापररूपात्[10] ज्ञानस्य तथाभावात्। ततो ज्ञानवदेव प्रतिक्षणं भेद इति। पूर्व्वपूर्व्वस्वसन्तान-भ्रविकारणाधीनाऽन्यथा वा। ततः पूर्व्ववदत्रापि दोषः। अथ चक्षुरादिकारणोप-निपातमविच्छिन्नमेकमेव। ततस्तदविच्छेदादविच्छेदसम्भविनी (c 103b) ग्राह्यतैकैव ततो नित्यता वज्रोपलादेः।

नैतदस्ति।

वज्रोपलादौ विच्छेदमन्तरेण प्रमादय।
सर्व्वथा नेति केनायमविच्छेद. प्रतीयता।

यदाप्यविच्छेदस्तदापि पर्यव[11]सानावधिप्रतीतिप्रसङ्ग इत्युक्त। तस्मा-द्वज्रोपलादावपि समानमेव। तस्मादविद्यमानानां शब्दादीना कारणभूतानां

सम्वेदनासङ्गतेर्व्विषयाकारं विज्ञानमिति सिद्ध। आ चा र्ये णापि प्रतिपादितं।

स्मृतेरुत्तरकालश्च नह्यसावविभाविते ।

तदाह (—)

स्मृतेश्च द्विरूपसिद्धेति ।

## १४. आत्मसंवेदनप्रत्यक्षम्

अथापि स्यात्। सम्वेद्यसम्वेदकरूपतया द्विरूपतया न विषयाकारतेति ग्रन्थार्थं । तदयुक्तं।

विषयज्ञानतज्ज्ञानवि[12]शेषाद् बुद्धिरूपतेति प्रकृतं।

तत्र च विषयाकारता प्रकृता साधयितु। कथ पुनर्ज्ज्ञायते द्विरूपम्विज्ञानमिति प्रक्रमात्। तत्रापि द्व्याभास हि विज्ञान स्वाभास विषयाभासञ्च। तत्र विषयतायामेव महत्यास्था। यतः।

सम्वेदनस्य तादात्म्ये न विवादोस्ति कस्यचित्।
तस्यार्थरूपताऽसिद्धा सापि सिध्यति संस्मृतेः ॥ (४२१)

ननु च स्वसम्वेदनेपि विवाद एव।

नैतदस्ति। सम्वेदनमात्राभिप्रायादेवमुच्यते। स्वसवेदनन्तु साध्यमिति यु[13]क्तमेवैतत्। तथा च।

स्वसम्वेद्यता चेति पश्चात्सा साधयिष्यते ।

ततः स्वसम्वेदनव्यतिरिक्तसम्वेदनात्मत्त्वेन विवाद इत्ययमत्रार्थः। (C 104a) तस्यत्वर्थाकारताया विवादस्तदसिद्धेः। सापि तदाकारता सम्यक्स्मृतेर्व्विभागेन स्मृतेः सिध्यति।

ननु निराकारतायामपि स्मृतिर्व्विभागवत्युपपन्नैव। तत्कथमनैकान्तिकाद्धेतोरर्थस्य सिद्धिः।

नैतदस्ति। यत ।

परस्परस्य भेदेन स्मृतिरत्र विवक्षिता ।
स्पष्टभेदेपि[14] नाना सा चेति हेतुत्त्वमुच्यते ॥

भेदेनाननुभूतेस्मिन्नविभक्ते स्वगोचरैः।
एवमेतन्न खल्वेवमिति सा स्यान्न भेदिनो। (४२२)

न चानुभवमात्रेण कश्चिद् भेदो विवेचकः ।
विवेकिनी न चास्पष्टे भेदे धीर्यमलादिवत् ।। (४२३)

**यदि तत्सम्वेदनं न प्रतिनियतस्पष्टनीलाकारो रागवशात् विभक्तमुपजायते। तदा न विवेकेन स्मर्य्येत। अथ कश्चित्सामग्रीविशेषाद् भेदोऽवश्यम्भावी तत एव भेदवती स्मृति.। तदयुक्त[15] (।) यतो नार्थानुभवमात्राद्विशेषः सामग्री प्रभावोन्नीयमा(ना)त्मा स्मृतेर्न्निबन्धनं स्पष्टभेदाभावात्। न चास्पष्टभेदादेव विवेकिनी यमलकादिषु स्मृतिः। अथ विषयोपि तत्रानुभूत इति स्मर्यते। तदव्यभिचारावतः स्वयमभिन्नमपि तद्भेदादेव भेदेन स्मृतेर्व्विषय.। यमलकयोरपि यदा विलक्षणदण्डादियोगस्तदा भवत्येव विशेषोपलक्षणम्। यथैव विषयबलात्कल्प्यते ऽनुभवस्तथा (c 104b) स्म[16]र्यमाणावपीति ततो विज्ञानस्मरणमिति व्यवहारः।** 192a

**तदसत्।**

विषयाकारता[1]भावे विषयस्मरण कथ ।
अतीतस्य हि नार्थस्य स आकार परीयते ।।
प्रत्युत्पन्ने हि तस्मिँस्तत्कथ स्मरणमुच्यते ।
स्मरणस्य स आकारो यदि किं सम्विदा न वा ।

**अनुभवादाकारवत. स्मृतिरुदयमासादयन्ती तदाकारेति युक्तं। तथाहि।**

स्मृतिरर्थाद्यदि भवेत् सर्व्वत्राप्यविशेषत ।
दूरादित्त्वेपि वस्तूना स्मृतेरुदयन्नेक्षते ।।
अनुभूतिमथाश्रित्य हेतुरस्ति स एव न ।
अर्थाभावेप्यनुभवात् स्मृतेरु[2]दयसम्भवात् ।।

**यदि साकारता ज्ञानस्य न भवेत्। कथन्तदाकारता स्मृते.। तथाहि। विज्ञानं स्मरणप्रत्ययेनालभ्य(म्ब्य)मानन्नाकारव्यतिरिक्तमालम्ब्यते अतियोगयोगिनापि। यस्य यथाधिमुक्त्या विषयीकरणं तथैव तदिति मन्तव्यं। तस्मात्स्मृतेरूपमरूपता प्रसिध्यतीति युक्तं स्वसम्वेदनञ्च। तथा चा चा र्यं। स्वसम्वेद्यता च वा। आह च (—)**

द्वैरूप्यसाधनेनापि प्रायः सिद्धं स्ववेदनं ।
स्वरूपभूताभासस्य तदा सम्वेदने[3] क्षणात् ।। (४२४)

**ननु सर्व्वेणैव द्वैरूप्यसाधने न स्वसम्वेदनं प्रसिद्धं। किमुच्यते प्राय इति।**

**नैतदस्ति। मुख्यतो द्वैरूप्यसाधने द्वैरूप्यप्रसिद्धिरानुषङ्गिकी पुनः स्वसम्वेदनतापि। यतः. स्वरूपभूत आभासस्तदा प्रतीयते। न च स्वसम्वेदनादन्यतः प्रतीतिः।**

**ननु स्वसंवेदनमित्यात्मनो ग्राहकं ततश्च तदेव ग्राह्यं ग्राहकञ्चेति। न** (C 105a) **चैवमात्मकताया दृष्टान्त· कश्चिदस्ति। येन तत सिद्धिः। प्रदी[4]-पादिवत्प्रकाश्यप्रकाशकभाव इति चेत्। न. प्रदीपादीनामपरप्रकाशकनिरपेक्षत्वा-त्प्रकाश्यरूपता नास्त्येव। कुत. प्रकाश्यप्रकाशकतया दृष्टान्तता।**

ग्राह्यता तु यदा तेषा तदाप्यग्राहक भवेत्।
बुद्धचक्षयोर्न च स्वात्मवेदन निश्चित द्वयो ।

**तस्मात्स्वसम्वेदनन्नाम नास्त्येव ।**

**ननु चात्मा ग्राहकरूपो ग्राह्यश्चेतीष्यते भवद्भि.**

**तदप्यसत्। यत.।**

धर्मभेदेन तत्रापि[5] शक्या [? ग्राह्य] ग्राहकरूपता।
ग्राह्यत्त्व द्रव्यरूपेण ग्राहकत्त्व ततोन्यथा।

**द्रव्यान्तरासाधारणेनात्मत्त्वेन ग्राहकता द्रव्यत्वेन तु साधारणेन ग्राह्येति युक्त। भवतस्तु सर्व्वमेतदसमञ्जस। न च परप्रसिद्धिमात्रादेव दृष्टान्तः। स्व-प्रतिपत्तावुपायत्त्वाभावात्।**

**तदेतदसत्।**

ग्राह्यग्राहकभावो हि नैवास्ति परमार्थत ।
अपरप्रत्यय रूपमतद्व्यावृत्तितस्तथा।

**यत्र हि परस्य प्रकाशकत्त्वं न प्रतीयते[6] तदेवात्मानं प्रकाशयतीति व्यपदि-श्यते। परप्रकाश्यव्यावृत्तत्त्वात्। तथा च प्रतिभासमाने रू[? दी]पादौ न परस्य प्रकाशकता तथा प्रतिपादितमत एव प्रदीपस्य दृष्टान्तता।**

चक्षुषि व्यापृतेप्यर्थस्तामिस्रे न प्रतीयते।
प्रदीपसन्निधेस्तस्य (C 105b) प्रत्ययात्तत्प्रकाश्यता।
दीपादयो नैवमिति तत स्वात्मप्रकाशका ।
न चाक्ष ग्राहक तत्र स्वरूपेण प्रकाशनात्।
सुखादयोपि नैवामी परस[7]म्वेदनोदया ।
आत्मना तु सुखादीना ग्राह्यत्त्वे बाह्यता भवेत्।
समवायसमावेशात्तदेव स्यात्स्ववेदन।
समवाये प्रमाणञ्च नेत्येतत्प्रतिपादित ।

**ननु ग्राह्यतयाभिमताना रूपादीनां स्वसम्वेदनाभ्युपगमे रूपादिकमहमिति प्रत्ययो भवेत् आत्मनीव। तथाहं सुखमिति भवेत्।**

**नैतदस्ति। यस्मात्।**

गौर श्यामोहमित्येव प्रत्ययो दृश्यते न किं ।
तथापि ग्राह्यतास्त्येव रूपादी[8]ना शरीरिणा ।।

रूपादयो हि शरीरसमवायिनोहमिति प्रत्ययेन गृह्यन्ते। न च ते भवन्मते स्वसम्वेदनाः।

ननु रूपमहमिति न दृश्यते तेन ग्राह्यता न तु स्वसम्वेद्यता।

तदप्यसत्।

तद्भावेपि न दृष्टस्य न तद्रूपनिबद्धता ।
गौरादयो न रूपत्त्वव्यतिरेकव्यवस्थिता ।

यद्ययमहं प्रत्ययो न ग्राह्ये भवेत् रूपे गौरादौ न भवेत्। न च रूपमहमिति भवति। तस्मान्न ग्राह्यतानिबन्धनो[9]हंप्रत्ययो नापि ग्राह्यताविरोधी। अथात्मसम्बन्धादुपचारादहं गौर इति प्रत्ययः। मम रूपमिति व्यतिरेकदर्शनात्।

ननु भेदाभावान्मम (c 106a) गौर इति न भवति। मम रूपमिति तु भवति किमत्र निबन्धनं (।) तस्मादय प्रत्ययो निर्निबन्धन एव। ततोऽहमिति व्यावृत्तेर्न्न रूपादीनामस्वसम्वेदनताप्रसिद्धिः। न चाह गौर इत्युपचरितवृत्ति परस्पर मुख्यस्याभावात्। न च मम मुखादिकं ममेति[10]प्रत्ययस्य किञ्चिदालम्बनं। भेदरूपमुपलब्धिगोचरः शिलापुत्रकस्य शरीरमिति यथा। तथा हि·

शिलापुत्रकशब्दस्य दृश्यते ग्राववाच्यता ।
शरीरशब्दवाच्यत्त्व तस्यैव पुनरीक्ष्यते ।
तथा ममेति शब्दस्य शरीर वाच्यता गत ।
पुन (ना) रूपादिशब्दस्य नापर सप्रतीयते ।

सुतरामपि निरूप्यमाणमहमिति प्रत्ययस्यापरमालम्बन शरीरगतरूपादेरपर नोपलभ्यते। तेन मम मुख[11]मिति शरीरसम्बन्ध एवानादिवासनापरिकल्पविशेषतो वा प्रत्ययः। यथा तर्हि शरीररूपादिषु भवत्यहप्रत्यय स्वसम्वेदनात्। य[? त]था कुडयादिष्वपि भवेदहं कुडयमिति। यथा पुरोवर्त्तित्त्व कुडयस्य शरीरापेक्षया तथा कुडयापेक्षया शरीरस्यापि स्यात्। न भवति। तस्मान्न स्वसम्वेदनता कुडयादीना।

अत्रोच्यते।

यथाऽस्ववेदनत्त्वेपि न कुडयादावहङ्कृति ।
तथा स्ववेदनत्त्वेपि न कुडयादावहङ्कृति । 12
(c. 106b) यथा वा वासनासङ्गात् कुडयादेरशरीरता ।
नियतादेव सस्कारात्तथाहकारवर्ज्जन ।

यथा कुडचशरीरयो· प्रतिनियतवासनासामर्थ्यात्परस्परं भेदस्तथाहंकार-विषयतेतरभावोपि । तस्मादर्थग्राहकव्यापारविषयत्त्वायोगादेव स्वसम्वेदनता । अस्ति चात्र दृष्टान्तः। यस्यापरोधिष्ठाता नास्ति तस्य स्वतत्रतया प्रतीतिः। नास्ति च सम्वेदने कुडचादीना कश्चिदधिष्ठाता[13] ततः स्वतन्त्र सम्वेदनमिति सिद्धः स्वसम्वेदनभावः। चक्षुषस्तु ग्राहकत्त्वं न रूपादितया ग्राह्यत्वात्। न खलु कारका द्वचञ्जकस्य कश्चिद्विशेष इति। प्रतिपादयिष्यते च। तस्मात् व्यतिरिक्तापेक्षया-प्रकाशाऽभाव· कारकभाव एव। प्रकाश्यता तु स्वत एवेति युक्तं। तथैव दर्शना-त्तथैव स्मरणादिति न्याय एषः। अपि च।

अनित्यसङगमात् कुडचे नाहङकारस्य सम्भव ।
नित्यमेवानुबन्धेन[14] शरीरे तस्य सयति ।

तस्मादहंकारस्य नित्यानुबन्ध. कारणमिति न कुडचादौ भवत्यहकार इति विभाग.। न चाहङकारात्स्वसम्वेदन। परानपेक्षवेदनस्य तथा स्थिते । अथ ग्राहका-कारेण तस्य वेदन ।

तदप्यसत्। यतः।

चक्षुराद्यतिरेकेण तदाकाराप्रवेदनात् ।
ग्राह्यरूपाश्च ते सर्व्वे दृश्यन्ते (C 1072) बाह्यवादिभि ।
न च तद्व्यतिरेकेण सुखादेरुपलम्भन ।
तेना[15] नपेक्षसम्वित्त्वात्सर्व्वमेव स्ववेदनम् ।

न खलु शरीरेतरभूतरूपादिव्यतिरेकेणापरमुपलभ्यते यस्य ग्राहकता भवेत्। सुखादयोपि शरीरव्यतिरेकेण न विभाव्यन्ते। न च ते विभाव्यमाना अपि ग्राहका. स्वरूपमात्रपर्यवसानात्। सुखादिके च ग्राह्यताया अपि भेदो भवेत् । भवत्येवा-भिलासा [? षा]दिभेदेपि रूपादित्त्वेन भासनादिति चेत्। न (—)विरूपा[16]-दिभेदेन प्रतिभासनेऽर्थरूपताभावात्। नहि परस्परविरोधि रूपमेकस्य युक्तं। ग्राहकापेक्षया न विरोध इत्यपि न वाच्य। अपेक्षाया अयोगात्। नहि ग्राहकान्तरा-पेक्षया तदन्यद् भवति· ग्राहकस्य कारणत्त्वप्रसङगात्। तेन विरूपादिरूपता विद्य-मानैव प्रकाश्यते चेत् । यदि तर्हि विद्यमानैव प्रकाश्यते कथम्पश्चाद्बाध्यते पर्या-लोचनेनेति य[17]त्किञ्चिदेतत्। अर्थ सर्व्वमप्येतदुपन्यस्त ग्राह्यमेव। ग्राहिका तु 19b
बुद्धिरपराऽर्थापत्त्या तदेव वेद्यते। तदपेक्षमस्य सम्वेदनं। ततः स्मरणादप्युत्तर-कालन्तथाभूतैवाऽसौ प्रतीयते।

तदप्ययुक्त।

नैवालोको विजानाति ग्राह्यरूपान्तर विद ।
अर्थापत्त्या तदाकारस्पष्टता वा (c 107b) प्रतीतित ।

**न खलु रूपसुखादिव्यतिरिक्ताकारवती बुद्धिरर्थापत्त्या लोकेन व्यवहारवता प्रतीयते बुद्धिर्ममास्तीति । विभावित[1]ग्राह्याकारातिरेके प्रतिनियताकारबुद्धि-रूपं विकल्प्य जालमेव केवलमुपरि बभ्रमीति लोकस्य। अथ मूर्त्तस्यैव पदार्थात्मनो देशादिनियमेन व्यवस्थितस्य प्रतिनियतरूपविभावनं। ननु बुद्धिरेव रूपात्प्र-मेयप्रकाशनमात्रमेव तस्यारूपमिति। न रूपादिवत्प्रतिनिय(त)रूपविभावनं।**

**तदप्यसत् ।**

अविभावितरूपाणामपि ग्राहकता यदि ।
विषाणस्य शशादीनामपि ग्रा[2]हकता न किं ।
तेषान्तथा प्रतीतेश्चेद्बुद्धेरप्यप्रतीतता ।
बुद्धिर्ममास्तीति पुनर्नरूपादे परात्मवित् ।

**रूपादिविशेष एव प्रकाशकान्त प्रदेशी स्वभावभूतधर्मभेदमादाय तथा व्यपदिश्यते। रूपादिक हि परोक्षापरोक्षसाधारणं, प्रकाशमानरूपता तु रूप-विशेषतया सजातीयादपि रूपाद्व्यावृत्ता। ततो व्यावृत्तिभेदाद्धर्मभेद.। तेन रूपादेर्बुद्धिरिति व्यपदेशाध्य[3]वसायवृत्तिः। तस्मात्सम्वेदनकाले स्मरणकाले च नापरा बुद्धिर्विभाव्यत इति सिद्धं स्ववेदन रूपाद्याकारतयेति सिद्धान्त·।**

**तेनेदमपि निराकृत भवति।**

ग्राह्यग्राहकयोरैक्ये तदेकस्य प्रतीतित ।
नियमेनापरस्यापि प्रतीतिरथवान्यथा ।

(c. 108a) **एकप्रतीत्या परस्यापि पराप्रतीत्या चापरस्यापीति प्राप्तम्। प्रतीयत एव हि रूपादिरूपता प्रकाशरूपता च कस्मान्न सन्दे[4]हः।**

**यदप्युक्तं। ग्राहकमेव स्मरन्ति** कोपि मया दृष्ट आसीत् **इति स्मरणात्।**
**तदसद्यतः। तत्र विशेषे ग्राहके सन्देह एव। सामान्ये तु ग्राह्येपि न सन्देहः। ममेति च देहसम्बन्धित्वन्दर्शयति लोकः। तस्यापि देहस्य स्वप्रकाशत्वमेव नापर-प्रकार इति। एतच्चोक्तमेव। अथापि परस्याभिप्राय.।**

सत्यमेतन्न रूपादिव्यतिरेकात्परापि धी ।
तथापि न स्वसम्वित्तिस्तस्या[5]ग्रहणमन्यत ।

**तदसत्। यतः।**

धियाऽतद्रूपया ज्ञाने निरुद्धेनुभवः कुतः ।
स्वञ्च रूपं न साधन्ती*त्युत्सन्नोनुभवोर्थिनः ॥ (४२५)

यदि तदुत्तरकालभाविन्याऽपरया बुद्ध्याऽतदाकारयाऽर्थापत्त्यादिरूपया ज्ञानमिष्यते तदा तत्पूर्व्वकं वेदनं निरुद्ध। क्षणिका हि सा न बुद्ध्यन्तरकालमास्त इत्यभ्युपगमात्। ततो निरुद्धेऽपरसम्वेदनकाले पूर्व्व[6]केऽनुभवे कुतो भव.। स्वरूपस्यासम्वेदनाद् ग्राह्यस्य चक्षूरूपाभावात् सकल एवोत्सीदेदनुभव । न ह्यस्वरूपं शक्यमनुभवितु। स्वरूपानुभवस्य सर्व्वत्रानुभवत्वात्। स्वरूपञ्चाविद्यमानस्य पूर्व्वानुभवस्य नास्तीति नानुभव.। पूर्व्वस्योत्तरानुभवेन । स्वरूपस्य चानुभवो (c. 108b) नेष्यते। न चेक्ष्यते। तस्य विषयाकाररहितत्त्वात्। विषयाकाररहित[7]-त्त्वे वा स्वसम्वेदनानुपगमात्। अनवस्थाप्रसङ्गादिति प्रतिपादयिष्यते ।

अपि च। बुद्धिरन्येनानुभूयत इति न सदेतत्। यतः।

वहिर्मुखञ्च तज्ज्ञान भात्यर्थप्रतिभासवत् ।
बुद्धेश्च ग्राहिका बुद्धिर्न्नित्यमन्तर्मुखात्मनि ॥ (४२६)

यदि बुद्धेर्ग्राहिका बुद्धिरपरा तदा बहिर्मुखावभासिनी भवेद्रूपादिबुद्धिवत्। न ह्यन्येनान्यद् गृह्यमाणमबहिर्भावेन प्रत्येतुं शक्यं। बुद्धिरपि सर्व्वदान्तरत्त्वेनाभास[8]ते। अथवात्मीयतया। बुद्धेरन्तर्भावावसानं ।

स्मरणेनापि बुद्धे स्याद् ग्रहणेन्तञ्चकासन ।

स्मरणेनापि यदात्मीया बुद्धिरालम्ब्यते तदपि बहिरवभासिनी स्यात्। अथ सा कालभेदादेवमवभासतेऽत्रापि स्वरूपभेदादेवमिति किं नेष्यते। न च व्यतिरिक्ताकारतयाऽनवभासमान ग्राहकादन्यदिति। शक्यमवसातुं। तस्मादान्तरत्त्वे वानुभवेनुभूयमाना बुद्धिः स्वसम्वेदन[9] रूपैवेति युक्तं । समानदेशतया तथानुभव इति चेत् । न । समानदेशमपि स्वरूपभेदेनैव गृह्यते। संसर्गाविभागस्तु प्रत्याख्यात एव। तस्माद्यस्य बुद्ध्यन्तरेण बुद्धिर्गृह्यते तस्य सा बहिष्ठेनेवेति न्यायः। अपि च ।

यो यस्य विषयाभासस्त वेत्ति न तदित्यपि[10] (।)
प्राप्तं

यस्य हि विषयस्य योवभासः ज्ञानसन्निविष्टस्तम्विषयाभासि ज्ञानमर्थं न वेत्ति। स्वरूपभू[11]तार्थाभासासम्वेदनात्। स्वसम्वेदनेन हि विषया(का)रानु-

*हे पुस्तके—सा वेत्ती ।

भवे तत्त्वत· सोप्यर्थोनुभूतो भवेत्. अयमेवार्थाविग्रहः। पादपादेरिव (C 109a) पिण्डाकारग्रहः। अस्वसम्वेदने तु सर्व्वमसमञ्जसं सपन्नं।

कः सम्वेदनान्यम्ताद्रूप्यादिति चेन्मत ।। (४२७)

तद्रूपोत्पद्यते धीश्चेत्तदेवार्थस्य वेदन ।
तद्रूपवेदनाभावे न भवेदर्थवेदन ।

स्वसम्वेदनन्तामभाभूदपरं। न हि तदभावे तन्न[12]भवति। नहि स्वसम्वेदनाभावे नीलमनील तथा न बुद्धिरबुद्धि.। अन्यवेदने बुद्धिर्न्न स्वसम्वेदने। अर्थरूपता च स्ववेदनलक्षण न स्वसम्वेदन। आत्मनोपि बुद्धित्वप्रसङगात्। तस्मादात्मनि स्थिता तदाकारा स्वसम्वेदनमन्तरेणापि बुद्धिरेव। यदि तर्हि स्वसम्वेदनमन्तरेणापि पूर्व्वार्थाकारमात्रादन्यथा वा तदा

प्राप्तं सम्वेदनं सर्व्वसदृशानां परस्पर ।

अस्वसम्वेदने हि तदाकार[13]तामात्रमवशिष्यते। तदा चार्थबुद्ध्योरविशेष एव तदाकारमात्रेण बुद्धित्वे तस्यापि तत्प्राप्तमतोऽर्थोप्यर्थान्तिररूपो बुद्धिरेव बुद्धिलक्षणात्। अर्थत्वान्नेति चेत्। किमिदमर्थत्व। अबुद्धित्वञ्चेत्। अबुद्धित्वमर्थे सतीति· एकस्याप्यप्रसिद्धि·। तस्मात्स्वसम्वेदनतैव। यदि परं बुद्धित्वमिति न्याय.। अर्थात्मव्यवस्थितत्वं समवायसम्बन्धेनान्यथा वा।

तदप्यसत् ।

आत्म[14] स्वत्त्वेपि बुद्धित्वे प्रयत्नादे परस्पर ।
सारूप्याद्बुद्धिता प्राप्ता आत्मस्थत्वस्य वित्कथम् ।

प्रयत्नादीनामपि परस्पर सरूपस्य (C 109b) सम्वेदनत्त्वप्रसङग·। केन वात्मस्थितत्त्वमवधार्यते, बुद्ध्यन्तरेण।

ननु बुद्धित्त्वमेव नावधार्यते। तत्कथ बुद्ध्यन्तरेणेत्युच्यते। आत्मस्थितत्त्वे द्वयोर्बुद्ध्योः कथं परस्परेण ग्रहणं समानदेशतया भेदाभावात्। अथ भेदः[15] प्रतीयते। तदात्मनोपि भेदप्रतीतिरिति त्रयमेतत्परं विभिन्नं। न ह्यात्मनोऽप्रतीतौ तत्रस्थता प्रतीयते। अप्रतीयमानश्चात्मा कथम्बुद्ध्याकारतया बुद्ध्या प्रतीयते (।) नहि बुद्ध्या प्रतीयमाना रूपादयोपि. आत्मस्थतया प्रतीतेर्व्विषयाः। अनात्मस्थत्त्वात्तेषामिति चेत्। ननु व्याप्यात्मा कथमतत्स्थत्त्वमिति। तत्रासमवायादिति चेत्। कथमसमवायः। तत्राप्रतिपत्तेरिति चेत्। बुद्धिरपि तर्हि नैवात्मनि प्रतीयते तद्व्यति[16]रेकेणात्मनः प्रतीतेरभावात्। ननु प्रतीतिस्तावदिय क्रियारूपा विद्यते (।) तस्याः कर्त्रा वश्यमेव भवितव्यं नाकर्त्तृका क्रियास्ति।।

ननु यतोसावुपजायते चक्षुरादेः स एव कर्त्ता तेषां करणत्त्वादिति चेत्। किमर्थेन कर्त्रा परिकल्पितेन तेषामेव कर्त्तृत्त्वन्न चान्येन कर्त्रा विनाऽकारणत्त्वमेषां। यदिद शरीरमेव कर्त्तृ किमन्येन। शरीरान्तर्गता तर्हि बुद्धिरन्तर्म्मुखावभासिनी प्रती[17]यते। अत एव परबुद्धिरन्यथा न प्रतीयते। शरीरैकदेशभतानामपि तर्हि केषाञ्चिद्बुद्धित्त्वं ततोऽस्वसम्वेदनरूपादिभिः समानता। ततः प्राप्तं सम्वेदनं सर्व्वसदृशानां परस्परमिति। (C. 110a)तस्मात्स्ववेदनादेर्वार्थरूपव्यावृत्तिः।

बुद्धिस्वरूपा तद्धिच्चेत्

न सर्व्वं स्वरूपमर्थवेदनं। अपितु बुद्धित्त्वे सति बुद्धिगतं सारूप्यमर्थवेदनं। न वेदनमात्रं। नापि[18] सारूप्यमात्रं। वेदनामात्रे वेदनमेव भवेन्नार्थवेदनं। 20a सारूप्यमात्रेऽर्थानामपि परस्परं वेदनप्रसङ्ग इति।

तवैतदसत्। यतः।

नेदानी वित्सरूपिका। (४२८)

सरूपता यदि सम्वेदनलक्षणं तदार्थोपि सरूपः सम्वेदन प्राप्त इत्यत्रोत्तरं बुद्धिरिति। तत्रोक्तमेव। परस्परवेदने तेषामपि बुद्धिता प्रसक्ता। सम्वेदन प्रसक्तमिति येनोक्तं बुद्धित्त्वमपि तेषामिति तेनोक्तमेव।[1] तत्र तद्वेदनं कथमुत्तरं विशेषाभावात्। यतः।

सम्वेदन बुद्धिरिति नानयोर्भिन्नवाच्यता।

ततः परो विशेष एवाभिधातव्यः। स च सारूप्यादपरः।

ननु सरूपाणामर्थानां परस्परमग्राहकता दृश्यते (।) ग्राहकञ्च रूप बुद्धिः। यद्येवं ग्राहकरूपं नादृश्यं बुद्धिः। ग्राहकरूपतायाः सादृश्यमात्रेण रूपादीनामपि ग्राहकत्वाद्बुद्धित्त्वप्रसङ्गः। अग्राहकत्त्वाच्चेत्। ननु ग्राहकत्त्वे व्यव[2]स्थिते कस्यचिदग्राहकत्त्वमपरस्य तद्विपर्ययादवस्थाप्यते तदेव तु नावस्थितं।

अथ रूपादिव्यतिरिक्तं ग्राहकं। ननु रूपादिसरूपमस्वसम्वेदनं कथं रूपादि (C 110b)व्यतिरिक्तं। न च तत्कल्प(न)यां प्रमाणं। ग्राह्यतान्यथार्थस्य नेति चेत्। यथा दृश्यते तथैवास्तीति किमपरेण। तस्मात्स्वरूपसम्वेदनमेव विशेषः। तथा च सति यतो विशेषाद्रूपादिकादर्थाद्व्यावृत्तता तदेव बुद्धित्व[3]मिति न सारूप्याद्बुद्धित्वं। बुद्धित्त्वे स्वसम्वेदनलक्षणे यत्सारूप्यन्तद्वेदनमिति वे द न लक्षणमेव बुद्धित्वं न सारूप्यलक्षणं। किमर्थन्तर्हि सारूप्यमिष्यते प्रामाण्यं। तत्कृतनियतसम्वेदनहेतुरिति सारूप्यं तदिष्यते। तत सारूप्यन्नाम बुद्धित्त्वे सतीति बुद्धित्वस्य स्वसम्वेदनलक्षणस्य विशेष एव। न तदपरं सारूप्यं॥ बुद्धित्त्वमपि तर्हि सारूप्यविशेष एव न ततः परमिति प्राप्तम्। सत्यमेतत्[4] तथापि स्वसम्वेदन-

मात्रानुबद्धं सारूप्यं न सारूप्यमात्रभावि स्वसम्वेदनम्बाह्यार्थवादिन.। अपि च.

स्वयं सोनुभवस्तस्या न स सारूप्यकारणं।

नहि स्वसम्वेदनस्य सारूप्यं कारणं। स्वरूपञ्चेदपरप्रत्यय साक्षादवगम्यते किमत्र सारूप्येण। यद्यपरेणास्य सारूप्यं तदेदं [? तदिद]विदितमन्यदा नेति। नेदमेवं विकल्प्यते। गतोदके क खलु सेतुबन्ध इति हि न्यायः। किमिदा[5]नीं सारूप्येणेत्यपि न वाच्यं। यत.।

क्रियाकर्मव्यवस्थायास्तल्लोके स्यान्निबन्धन। (४२९)

व्यतिरिक्तविषयसम्वेदनरूपतानेन व्यवस्थाप्यते। सारूप्यतोऽन्यथा न भवतीति। (C 111a)नीलस्य कर्मण सम्वित्ति· पीतस्येवेति क्रियाकर्मप्रतिनियमार्थ-मिष्यते। न तावद्बाह्यार्थवादिनां नीलादिकं बाह्य स्वसम्वेदनमतः सारूप्यभावा-द्व्यवस्थाप्यते। अन्यथा लोके न बाह्यार्थनीलादिताव्यवस्था। यतः।

स्व[6]भावभूततद्रूपसम्विदारोपविप्लवात्।

नीलादेरनुभूताख्या नानुभूतेः परात्मनः॥ (४३०)

स्वभावभूतं स्वसम्वेदनस्य यन्नीलादिरूपन्तस्य सम्विदं बाह्ये नीलादिके विप्लवेनानादिवासनाप्रवाहवाहिनाऽपरोप्य नीलादिकस्यानुभूताख्या. न तु तत. परात्मा नीलादिकः कथञ्चिदनुभवगोचर.। स्वसम्वेदनरूपानुभव एव तु तस्या-नुभव उपचारात्। यतः।

परसम्वेदनेप्यर्थस्तद्रूपा[7]ऽन्यो यदेक्ष्यते।
मया विज्ञात एवाय व्यवहार प्रवर्त्तते॥

तल्लक्षणापरवेदने हि विदितमेवायमस्माकमिति हि लोके व्यवहारोऽत एव लोक इत्याह। परमार्थतस्तु स्वसम्वेदनमेव केवलं।

धियो नीलादिरूपत्त्वे बाह्योर्थः किंप्रमाणकः।
धियो नीलादिरूपत्त्वे स तस्यानुभवः कथं॥ (४३१)

यदि सम्वेदनमेव नीलाकारमात्मप्रकाशक बाह्योर्थः कि प्रमाणमादाय[8] विदितो भवेत्। नहि तत्र प्रत्यक्ष तस्य स्वसम्वेदनमात्र एव पर्यवसानात्। न च तत. परं नीलमाभासते नीलाकारद्वयाप्रवेदनात्। अथ तदर्थस्य (C. 111b) रूपं तदा सम्वे-दनमन्येन रूपेण विदितमविदितम्वा भवेत्॥ यद्यविदित स तस्यानुभवः कथं। स्वरूपेणाज्ञातमस्य सम्वेदनमिति कथं सगच्छते। विदितञ्चेत्। तथापि समान-कालमन्यथा वा वेद्यमानं कथम्वेदनमन्यस्य तदेवात्मी[9]यं रूपमावेदितमाभ्यामिति। कथं परस्परं सम्वेद्यसम्वेदकभावः। परोक्षत्त्वे तु नीलादेस्तद्रूपवेदनात्तत्प्रज्ञप्ति-

रिति भवेद्व्यवहारोनेनेदमज्ञायीति । साक्षात्तु वेदने नेदृ(श)योः परस्परप्रति-बद्धं सम्वेदनमिति । न प्रमाणं किञ्चित् । तस्मादसम्विदितं स्वयमन्येन सम्वि-दितेन ज्ञाप्यत इति वरमेतदेव ।

ननु न सम्वेदनात्मत्त्वं स्वसम्वेदनमात्रकमपि तु सारूप्ये सतीति युक्तं । न । सारूप्यमा[10]त्रात्सम्वेदनत्त्वासिद्धे । स्वसम्वेदनत्त्वे सति चेत् । यद्येवं स्व-सम्वेदनात्मत्त्वमेवास्तु किं सारूप्येण । यदि सारूप्यन्न स्यात्किन्न सम्वेदनं । भवत्येवेति चेत् । किमिदानीं सारूप्येण । यदि सारूप्यमन्तरेणापि भवति । भवेदेव किन्तु तदप्यस्तीत्युच्यते सारूप्याद्वेदनमिति ।

नैतदस्ति । यतः ।

यदा सम्वेदनात्मत्त्वं न सारूप्यनिबन्धनं ।
सिद्धन्ततस्वत एवास्य किमर्थेनोपनीयते ॥ (४३२)

स्वरूपमेव तत्तस्य ये[11]न सम्वेदनात्मता ।

अपरमपि तत्स्वरूपं स्वत एव । तत. सारूप्यात्सम्वेदनमिति कः सम्बन्धो यदि तत्स्वरूपं न भवेत् (।) किं स्वसम्वेदनात्मता (C 112a) जाता सत्यप्यथ गच्छेत् । तस्मात्सिद्धन्तत्स्वत एव रूप किमपरेण । तदर्थसम्वेदनन्न भवेदिति चेत् । नेदमपि युक्त । यदि नामात्मीय रूपमन्यसरूपम्वेत्ति तदेव वेत्तु । कथमर्थस्तेन सम्वेदितो भवेत् । इति किमर्थेन सङगतम[12]पनीयते । अर्थस्य सम्वेदनमिति मीयते । नह्यर्थः स्वसम्वेदनेऽनुप्रवेशी येन सम्विदितो भवेदिति नार्थवेदनन्नाम । अपि च । यदि सारूप्यनिबन्धनं तदा महाननर्थः । यतः ।

सर्व्वात्मना हि सारूप्ये ज्ञानमज्ञानतां व्रजेत् ।
साम्ये केनचिदङ्गेन स्यात्सर्व्वं सर्व्ववेदनं (४३३)

सर्व्वात्मना हि सारूप्यं सकलभेदापगमे स्यात् । तदा चार्थ एवासावपरार्थव्यक्ति-वत् । कथन्त(ज्) ज्ञान । ज्ञानत्त्वेनाधिकत्त्वेन सर्व्वात्म[13]ना साम्यम्भवेत् । अथ केनचिदङगेन भेदोपि तदा सर्व्वं सर्व्ववेदनं भवेत् सकलस्य केनचिदङगेन समान-त्वानपगमात् । बोधाकारता परित्यज्यान्ये सर्व्वेण समानतया सम्वेदनमिति चेत् । सकलज्ञानसम्वेदनत्त्वप्रसङगः । यत उत्पद्यते तदेव सम्वेद्यमिति चेत् । यदि नाम तत उत्पद्यते तथाप्यसम्वेद्यमितिच कुत एतत् । तद्रूपसम्वेदनात्त्वयं न तु तत उत्पत्तेः । न च यमलकयोः परस्परमुत्पाद्योत्पादकभाव· । अथ चैकवेदने परस्यापि वेदनव्यवहारः । यदि च यत उत्पत्तिः सरूपता च तस्य वेदनं (C. 112b) तदा ॥

तथा नीलादिरूपत्वान्नीलाद्यनुभवो मतः ।
तथाऽनुभवरूपत्त्वात्तुल्योप्यनुभवो भवेत् ॥ (४३४)

बोधकरूपतया सम्वेदनेन समानता नीलादिरूपतयापि नीलादिता ततो नीलादिवेदनवदनुभववेदनमपि। अथ नीलादिकमप्युपबाधकमस्तीति नीलाद्य[14] नुभव.। अनुभवेनाप्युपबाधकेन न भवितव्यमित्यपि कल्प्यते।

तदप्यसत्। यत·।

केशादिप्रतिभासानान्नोपधानस्य कल्पना।
व्यतिरिक्तोपधानस्य कल्पनन्न च युक्तिमत् ॥

नहि तैमिरिकोपलब्धे केशावभासे केशोपधानकल्पनायामादरः। तत्र पूर्व्वं दृष्टं केशादीति चेत् सर्व्वत्रायमेव प्रकार. परिकल्प्यताम्। यथा नीलाकारदर्शनान्नीलकल्पना तज्जातीयतया तथो[15]पधानमन्तरेणापीति स्यात्। न च विरुद्धा- 20b
व्यभिचारितार्थकल्पनाया प्रतिबन्धग्रहणाभावान्नित्यानुमेयत्वादर्थस्य। पूर्व्वदर्शनस्य च जनकत्वदर्शनान्न च क्वचिदर्थदर्शन सर्व्वत्र विवादसम्भवात्। समनन्तरस्यार्थाकारताया क। उपधायकः। न। व्यवहितस्यापि लाक्षारसादेरुपधानस्य दर्शनादिति प्रतिपादितमसकृत्। अथापि स्यात्।

नानुभूतोनुभव इत्यर्थवत्तद्विनिश्चयः।
तस्माददोष इति चेत्[1] नार्थेप्यस्त्येष सर्व्वदा ॥ (४३५)

(C 113a) यदि नानुभवोऽनुभूत इति निश्चयो यथार्थोऽनुभूत इति लोकस्य। ततो निश्चयस्य दर्शनकारणस्य दर्शनादर्थानुभवोय नानुभवस्येति गम्यता। यदात्वनुभवस्यापि स्यात्स्यादेव तथा निश्चयः।

अत्रोच्यते।

नहि कारणमित्येव कार्यस्य जनक सदा।
सहकारिणमासाद्य कारण कारक भवेत्।

तदेव दर्शयति।

नार्थेप्यस्त्येप सर्व्वदा।

नह्यर्थेपि निश्चयो भवति[2] क्वचिद् भवति दर्शनात्। अथवा सर्व्वदार्थे नास्त्येवायं निश्चयोऽनुभवात्मभूतस्यैवाकारस्य निश्चयविषयत्वात्। उपचारात्तथेति चेत्। न(।)उपचारकल्पनायोगात् ॥

न क्वचिद् दृश्यतेऽर्थात्मा केनचिन्मुख्यवृत्तित।
तदभावे कुतो जातमुपचारस्य कल्पनम् ॥

तस्मादयमर्थ इति निश्चयोऽनादिवासनाबलावलम्बी नानुभवमात्रजनितः। स्वप्ने च नास्ति दर्शनमर्थस्य तथापि भवत्यर्थ इति निश्चयः। त[3]स्मादनर्थानुभवेपि

निश्चयाभावस्तदभावेपि भाव इति न निश्चयस्यैकान्तिकता। ततः कथन्तत्त्वव्यवस्था।

कस्माद्वानुभवे नास्ति सति सत्तानिबन्धने ॥

अनुभवे हि सर्व्वमनुभवनिबन्धनमस्ति। तथापि न निश्चय इति कथमेतत्। कथञ्चिन्न भवति सहकारीवैकल्यादिति चेत्। न तर्हि निश्चयादनुभवव्यवस्था। अनुभूतेप्यभावादिति यत्किञ्चिदेतत्। अनुभवव्यवस्था तु तदाकारतयेति न बाधितोनु[4]भवोनुभवस्य (C 113b)। नहि कारणान्तराभावनिबन्धो निश्चयाभावोनुभवाभावं व्यवस्थापयितुं क्षम.॥ कारणान्तरमेव नास्तीति तथा गम्येत नत्वनुभवाभावः।

अपि चेदं यदाभाति दृश्यमाने सितादिके। (४३६)
(ऽ)प्यन्यत् सिताद्यभिव्यक्तिरूपं सम्वेदनं स्फुटम्[१] ॥
तत्कि सिताद्यभिव्यक्तेः पररूपमथात्मनः॥ (४३७)

नह्यर्थसद्भावमात्रकमेवार्थदर्शनमवश्यमर्थदर्शनेनार्थमात्रकादधिकेन भवितव्यम्।[5] यदि तदधिकं प्रतिभासमानाद्वहिस्तदप्यर्थरूपमेव कथमर्थदर्शनं। तस्मादवभासमानेन तेन भवितव्यं। यच्च तदा भाति दृश्यमाने सितादिके। परिस्फुटं सम्वेदनं। तत्सिताद्यभिव्यक्तेः परं वा भवेदपरावाऽभिकल्पने [? ल्प्यते] यासौ सिताद्यभिव्यक्तिर्भवतोभिमता।

पररूपेऽप्रकाशायां व्यक्तौ व्यक्तं कथं सितं।

नह्यनभिव्यक्तेन कश्चिदभिव्यज्यते यदेव तदभिव्यक्तिरूपं कृतं सम्विदितं[6] सैवाभिव्यक्तिरन्या तु परोक्षा चक्षुरादिसंस्थानीया (।) भवतु न साभिव्यक्तिर्न च चक्षुरादिव्यतिरिक्तासौ प्रमाणेन प्रतीयते। चक्षुरादिमात्रत एव समीहितसिद्धेः।

सैवाभिव्यक्तिरप्रत्यक्षा नापरेति चेत्। यदि नामाप्रत्यक्षा व्यक्तिरुत्पन्ना सैवोत्पन्ना तु कथमर्थः प्रकाशितः। नह्यस्योत्पत्तावर्थस्य किञ्चित्। (C 114a) अर्थेऽसाविति चेत्। अर्थ इति कः सम्बन्धः। अर्थं पश्यतीति चेत्। ननु दर्शनन्न प्रतीयते कथं[7] पश्यतीति। अर्थस्य कर्मभावश्चेत्। केयं कर्मता नाम। यद्यर्थमात्रादधिका सा प्रतीयते। तस्यामप्यपरा प्रतीतिः। ततः कर्मता। सापि प्रतीयते। ततः पुनः कर्मतेति नानवस्थातो मुक्ति.। तस्मात्

ज्ञानं व्यक्तिर्न सा व्यक्तेत्यव्यक्तमखिलं जगत्॥ (४३८)

---

[१] रङ-ब्शिन् रिग्-प-ग्सल्-व नि। स्क्येस्-पऽि स्नङ-व ऽदि गङ-यिन्।—(स्वभाववेदनद्योत किमिदमुत्पत्तिभासक।) इत्यधिक भोट पु०।

नह्यर्थस्य प्रदीपादिव प्रभास्वररूपमात्रोत्पत्तिरपि तु ज्ञानरूपा व्यक्तिः सा च यद्यप्रत्यक्षा तत्कथमर्थो व्यक्त॰। स्वरूपेण व्यक्तश्चेत्। सर्व्वस्य व्यक्तताप्रसङ्गः। स्वविशेषादिति चेत्[8] व्यर्थमन्यत् ज्ञान। तथैव व्यक्तता चेत्। केनेदं प्रतीयते। यक्त्यन्तरेणेति चेत्। न. यतः।

व्यक्तेः व्यक्त्यन्तरव्यक्तावपि दोषप्रसङ्गतः।

येन तदपि व्यक्त्यन्तरन्न प्रतीयत इति स्वरूपमेव पूर्व्वव्यक्तेर्व्यक्तं। तस्याप्यन्येन व्यक्तिर्न्न प्रतीयत इति व्यक्त्यन्तरानुगमादनवस्था। तस्मात्स्वरूपमेव प्रतीयमानमभिव्यक्तिमुक्तमेव प्रतीयते। अन्यथाभिव्यक्तमेतदिति न स्यात्प्रतीतिः। यतः।

दृष्ट्या चाज्ञातसम्बन्धम्विशिनष्टि तया कथम्। (४३९)

दृष्टोऽर्थ इति दृष्टिविशेषणता प्रतीयते। न च विशेषणाग्रहणे (c 114b) विशेषणविशिष्टविशेष्यग्रहः। ननु गौरिति विशेषणग्रहणादेव किं गोत्वमपर दृश्यते। न. गोत्वस्यागोव्यावृत्तिरूपत्वात्। न च प्रतीतिरप्रतीतिव्यावृत्तिरूपा भवतेष्यते। तथा सत्यर्थस्य स्वसम्वेदनत्वप्रसङ्ग.। व्यतिरिक्ता च भवता प्रतीतिरिष्यते। सा चाप्रतिपन्ना कथं प्रती (ि)त (:) इति व्यवहारनिबन्धनं। कथ तर्हि व्यतिरिक्तप्रतीत्यप्रतीतौ प्र[9]तीत इति भवतोपि व्यवहारः। नहि भवतापि प्रतीतिरर्थश्च तद्व्यतिरिक्त. प्रतीयते इत्यभ्युपगम्यते। यथोपचारादेतद् भवति तथा प्रतिपादितमिति न दोष.। तस्माद् द्वयोरदर्शनान्न विशिष्टप्रतीतिः। अत्र च।

यस्माद् द्वयारेकगतौ न द्वितीयस्य दर्शनम्॥

नार्थप्रतीतिकाले दर्शनप्रतीतिर्न्न प्रतीतिः प्रतीतिकालेऽर्थस्येति कथ विशिष्टताप्रतीति.। ततः कथमेतदिति युक्तमेतत्॥

• द्वयोः संसृष्ट[10]यो दृष्टौ स्याद् दृष्टमिति निश्चयः॥ (४४०)

दृष्टमिति हि निश्चयोपि ससृष्टनिश्चय एव ततस्तथाभूतानुभवादेवानेन भवितव्य। भवन्मत्येति न भवतो न्यायः अस्माकन्तु प्रबलवासनापवनप्रेर्यमाणात्मनोन्यत्रार्थपादपप्रतिच्छायाऽन्यतो निश्चयपाण्डुपत्रपात इति निश्चयमात्रकादेव तत्त्वव्यवस्थितयः। तेनार्थप्रत्ययो नास्ति। न च नायमर्थ (c. 115a) इति। निश्चयप्रसवः तस्मादसन्मतं भवत इति[11] न्यायः। अथ।

सरूपं दर्शनं यस्य दृश्यतेन्येन चेतसा।
दृष्टाख्या तत्र चेत्सिद्धं सारूप्यं स्यात्स्ववेदनम्॥ (४४१)

स्यादेतत् (।) नार्थस्वरूपात्मवेदनाद्दृष्टोऽर्थं इति व्यवसायोपि तु तथाभूत-स्यैव सम्वेदनान्तरेण वेदनात्। यथा दण्डीति दण्डयुक्तस्य पुरुषस्य तद्व्यतिरिक्तेन तथाभूतस्य सम्वेदनेन परिग्रहे व्यवसायः। न विशेषणविशेष्यभूतार्थग्रहणं स्वसम्वेदनेन क्वचिदुपलब्धमित्यभिप्रायः। तदयम्भवतां[12] स्वपक्षस्यैवोपघात। तथा हि।

विशेषणविशेष्यत्त्व द्वयोर्न्न परमार्थत ।
कदाचित्कस्यचित्कश्चिद्विशेष्यादितया मत ॥

न खलु पारमार्थिको विशेषणविशेष्यभावः। कदाचिद्विशेष्यस्यापि विशषणत्त्वेन प्रतीतेः। ततो बुद्धिरेव सा तथाभूता प्रतीयते। सा च स्वसम्वेदनरूपैवेति सिद्धं स्वसम्वेदनं। यतः। सिद्ध सारूप्येऽस्य स्वरूपस्य वेदनं। अर्थस्तथाभूतो नास्त्येव। बुद्धिरपि[13] यदि न स्वसम्विदिता तदार्थश्चात्रिशेषणविशेष्यभूतः प्रतीयते इति प्राप्तं॥

यद्यात्मरूपन्नो वेत्ति पररूपस्य वित्कथम् ॥

यथात्मरूपं न वेत्ति पररूपमेव तर्हि वेत्ति। तस्य च न विशेषणविशेष्यभाव इति कथन्तद्विशिष्टताप्रतीतिः। अथ तद्रूपन्दर्शनमुत्पन्नं न तु स्वरूपसम्वेदन. परेण-पुनस्तत्र पण(?)तस्य (c 115b) दर्शने सति दृष्टाख्या न तु दृष्टिविशेषणस्य प्रथमं ग्रहणे पुनरन्येन तद्वि[14]शेषणत्त्वस्य कथं प्रतीतिः। अथ पश्चात्प्रतीयते तेनायमदोष इति।

तदसम्यक् (।) यतः (।)

तद्रूपवेदने तस्य पश्चादन्येन चेतसा ।

तद्रूपतैवतस्यास्त नन्तमेव(?)विशिष्टता ॥

मेयो हि दृष्टचविशिष्ट एव स्वप्रतीतिकाले विदितः। तदुत्तरकाले तद्रूपवेदने तद्रूपतैवास्तु न तु तया तस्य स्वविशिष्टवेदनं।

अन्यथा विदित पूर्व्वमन्यथा वेद्यतेन्यदा ।
यदि कस्यात्र सत्यत्त्व[15]मिति नेद प्रतीयते ॥ 212a

अथापि स्याद्यद्यपि प्रथममदर्शनं विशेषणस्य तथापि पश्चाद्दर्शने को विरोधः।

तदप्यसत्। यतः।

यद्यससृष्टयोर्दृष्टिर्व्विशेषणविशेष्ययो ।
विशेषणविशेष्यत्त्व तदा नैव प्रतीयते ॥

नहि सदा केचन(?)केवलयोर्दर्शनमात्राद्विशेषणविशेष्यता शक्या प्रत्येतुं । अपि च ।

सारूप्याद्वेदनाख्या च प्रागेव प्रतिपादिता । (४४२)

नहि सारूप्यमात्रोदये[1] तद्वेदनं । सरूपमेतदिति परेण वेदनमसम्भवि । तथा हि ।

दृष्टयोरेव सारूप्यग्रहोर्थश्च न दृष्टवान् ।
प्राक् कथन्दर्शनेनास्य सारूप्यं सो व्य(ध्य)वस्यति ॥ (४४३)
सारूप्यमपि नेच्छेद्यः तस्य नोभयदर्शनं ।
तदार्थो ज्ञानमिति च ज्ञानं चेति गता कथा (४४४)

नहि केवलदर्शने सारूप्यप्रतीतिः । अनेन सदृशमिति प्रतीतेः । अतीतानागतयोश्चार्थदर्शनयोरसहप्रतीते. (c. 116a) ।[2] नैवं प्रतीतिः । तदध्याहारेपि ज्ञानमेव नार्थप्रतीति' । पुनस्तथाप्यस्वसम्वेदनेऽनवस्थादोष उक्त एव । यस्तु सारूप्यमपि नेच्छति तस्यार्थो न प्रतीयेत । तदारोपस्यासम्भवात् । पश्चा(द्) दर्शनमर्थविलक्षणेन रूपेण प्रतीयमानं न तद्रूपतया तदित्यारोप्यते । तद्रूपतानभ्युपगमात् । स्वरूपेण च प्रतीयमानं पदार्थान्तरमेव ततः कोर्थः किम्विज्ञात केने[3]ति गता कथेयमति तूष्णीमासितव्यं । दृश्यते चेत् ।

ननु चार्थतया समुपलभ्यन्ते स्तम्भादयः । नहि दृष्टेऽनुपपन्नन्नाम । दत्तमत्रोत्तर । यदि दृष्ट स्वरूपेण दृष्टमिति तस्मात्पररूप दृश्यमाने सितादिके यदाभाति तद्यदि स्यात् तदा व्यक्त सितादिकं न स्यात् ।

अथ स्वरूप न तर्हि स्वयमेव प्रकाशते (।)
यत्तस्यामप्रकाशायामर्थः स्यादप्रकाशितः । (४४५)

स्वरूपमेव यदि[4]तदभिव्यक्तेर्ज्ञानरूपायास्तदा स्वयमेव तत्प्रकाशते परस्य प्रकाशकस्याभावात् । अथ न स्वरूपेण प्रकाशते तदा तद्रूपाप्रकाशनेऽर्थ स्यादप्रकाशितः । प्रतिभासमानरूपाप्रकाशने नार्थः प्रकाशते नाम । अत्र हि परोक्षस्यार्थः । यदेतद् ग्राह्यस्पष्टाकारप्रतिभासमेतत् बुद्धेः परोक्षतायां प्रतिभासमानस्य परोक्षता ततः (c. 116b) प्र[5]तिभासमान स्पष्टरूपाप्रकाशनमेव । तथा सति । अनुमानज्ञानवदर्थः परोक्ष एव भवेत् । अनुमानेपि स्पष्टप्रतिभासपरोक्षतयैव परोक्षता । तस्याप्यनुमानज्ञानस्य यद्यस्पष्ट आकारो न प्रकाशते तदापि नार्थप्रतिपत्तिर्भवेत् । तस्मादनात्मवेदने सर्व्वार्थादर्शनमेवेति स्थितमेतत्सम्वेदनम्विज्ञानमिति ॥

एतेनात्मवित्पक्षे सर्व्वार्थादर्शनेन ये ।
अप्रत्यक्षां[6]धियं प्राहुस्तेपि निर्व्वर्णितोत्तरा इति (। ४४६)

न्याय पूर्व्वक एवात्र यदि स्वाङ्गाप्रवेदनम् ।
अवेदिका भवेद्बुद्धिरर्थस्य स्वस्य चात्मन ॥

**नार्थस्य वेदिका प्रतिभासस्य परोक्षत्वात्, नात्मनोऽनभ्युपगमात् । किञ्च । सुखदुःखरागदोषादयः स्वसम्विदिता एवोपजायन्ते ते च बोधस्वभावा एव ततो बुद्धेरप्रत्यक्षा प्रत्यक्षवाधिता कथमभ्युपगमगोचरः । अथ न बुद्धिस्वभा[7]वा-स्तदसत् ।**

आश्रयालम्बनाभ्यासभेदाद् भिन्नप्रवृत्तयः ।
सुखतुष्ट्य[1]भिलाषादिभेदा बुद्धय एव ताः ॥ (४४७)

**चक्षुरादिजनितं परस्परविभिन्नमेव सुखं रूपादिविषयञ्च । तथाभ्यासात्स-मानचक्षुरादिविषयत्त्वे. पटुतरोदिता । आलम्बनादिजनितं च विज्ञानमेव न विषयादिक । यदि (C 117a) विषयोपि विज्ञानसामग्रीत एवोदयमासादयेद्दत्त ए[8]तस्मै जलाञ्जलिः । ततोमीषा परोक्षताभ्युपगमे ऽध्यक्षबाधनं । यत. ।**

प्रत्यक्षात(त्त)द्विविक्तञ्च नान्यत्किञ्चिद्विभाव्यते ।

**यत्त(ज्)ज्ञान ग्राहकस्याविभाव्यतायां प्रत्यक्षत्त्वेनेव स्वसम्वेदनमुच्यत इत्यसकृदुक्तमेतत् । अथान्येन विज्ञानेन वेदनमेषामभ्युपगम्यते । तथा च सति ।**

तथासति परोप्येनां भुञ्जीतान्येन विद्यादि ॥ (४४८)

**अन्येन हि विज्ञानेन परसन्तानवर्तिनोपि सुखादयो वे[9]द्यन्ते । ततः परसुखादि-वेदनेपि सुखितादिकं भवेत् । नहि ग्राह्यतयाऽन्येन वेदने सम्वेदने स्वपरसुखयो. कश्चिद्विशेषः । आत्मीयसुखवेदने सुखितेति चेत् । न (।) परकीयस्याप्याल्हा दात्मकत्त्वात् । न परकीयो वह्निरदाहकञ्चन्दनम्वा परकीयमनआल्हा-दकं । अथ ।**

मनस्विनो यथात्मीयमाह्लादयति चन्दन ।
परकीयस्य किन्तत्त्व दहनात्मकमेव तत् ।
अमनस्वि[10]नि का वार्ता तस्यात्मीय सुखोदय ।
पर(स्य)सुखसम्वित्तावेवमेव प्रकल्प्यता ।
यदात्मीयमनुत्पन्नं तदास्य सुखिता न किं ।
स्वसुखेन सुखित्वञ्चेन्न स्वरूपाविभेदत ।
दूरत्त्वात्तस्य रूपस्य वेदने कैव दूरता ।
असस्पर्शादनेवञ्चेत् सस्पर्शे स्यात्त्ववेदन ।

---

[1] ब्दे-स्दुग्-ऽदोद्-प (=सुख-दु खाभिलापादि)—इति भोटभाषान्तरे ।

सर्व्वात्मना हि सस्पर्शे स्वसम्वेदनलक्षण ।
एकदेशेन सस्पर्शे न तत्स्यादन्यवेदन ॥

(C 117b) यदि स[11]र्व्वात्मनात्मनि शरीरे चानुप्रवेशः सुखादेः स्वसम्वेदनात्मशरीरं वा प्राप्तं। सम्विदिते साक्षादन्यथा वानुप्रवेशः। सर्व्वात्मना वेदकस्य स्वसम्वेदनमेव प्राप्तं। सम्वेदनस्यैवं लक्षणत्त्वात्। परसुखमपि यद्यनुप्रविशेत् भवेदेव स्वसवेदनं अन्यथा तद्वेदनायोगात्। अथाननुप्रवेशेपि सुखवेदनमविभागान्न भवति। विभागस्य सम्भवात् [12]को विभाग'। तज्जा तत्प्रतिभासा सुखबुद्धि र्न्नयथा कथञ्चित्। परसुखवेदने तु न ततः परसुखानुत्पन्ना साक्षाल्लिङ्गत एवोत्पन्ना न विषयादसावनुमानेन परसुखसम्वेदनात्। तद्रूपप्रतिभासप्रत्यक्षतश्च आत्मसम्वेदनमिति विभागः। अत्राह।

तज्जा तत्प्रतिभासा वा यदि धीर्वेत्ति नापरा।
स्वालम्बना न सान्यस्याप्यस्त्यवश्यमिदं द्वयम्॥ (४४९)

अन्योपि परसुखमालम्बमानस्तत्स्वरूपमेव गृह्णाति ततस्तत्प्र[13]तिभातिभासिताऽभ्युपगमादेव प्रसिद्धा। ततो लिङ्गदर्शन चक्षुरादिसमानमिति तज्जत्वमेवापतितमर्थत इति द्वयमिति न विशेषः।

अथ नोत्पद्यते तस्मान्न च तत्प्रतिभासिनी।
सा धीर्न्निर्विषया प्राप्ता सामान्यञ्च तदग्रहे॥ (४५०)
न गृह्यत इति प्रोक्त न च तद्वस्तु किञ्चन।

अभ्युपगमः प्रमाणबलावलम्बी न भवति। तेनायमेव परमार्थः। (C. 118a) लिङ्गादुत्पत्तिमासादयन्त्युपलभ्यते बुद्धिन्नी[? र्न्ना]र्थान्नापि त[14]त्प्रतिभासिनी। एवन्तर्हि विषयलक्षणस्याभावान्न परसुखादिकं विषय इति न विषयाकारोसौ परसुखसम्वेदनावभासी सामान्यमवभासते। तत्रानुमानस्य सामान्यविषयत्त्वादिति चेत्। न। सामान्यस्य व्यक्त्यग्रहे ग्रहणाभावादिति प्रतिपादितम्। सामान्यस्य व्यक्त्यन्यदाकारशून्यत्त्वादिति च। बुद्धिरपि तर्हि तदाकारशून्यैव। ततो द्रव्याकारोसौ न स्यादिति चेत।

तदसत्।[15]

उपधानानुरागो हि धिया नासम्भधी(वी)मत।
भावनाबलतो बुद्धिस्तदाकारेति लोकवित्।

अत एवाह॥

तस्मादर्थावभासोसौ नान्यस्तस्या धियस्ततः। (४५१)
सिद्धे प्रत्यत्तभावात्मविदो

बुद्धिस्वाभावतायामाकारस्य प्रत्यक्षतात्मवेदनञ्च प्रसिद्ध। यदि नामानुमानं परसुखस्वभावे। तदन्यथाकारे तु स्वसम्वेदनमेव। तदपि परसुखस्यैव रूपमिति चेत्। न. परेणावेदनात्। परप्रत्य[16]येन बाध्यमानं कथन्तस्य रूपं. नहि 21b तस्य व्यवधानादिसम्भवः। व्यवहितञ्च कथमात्मीय सुखम्। तेन तत्सम्बन्धितया वेदनादिति चेत्। न. परस्य सम्बन्धिता प्रतीत्यभावात्।

परेणाविदित रूप तवास्तीति वदन्नसौ ।
राजशासनसोपानप्रक्रमेणोपरिस्थित ॥

न परोपि विचारयँस्तव सम्वेदनमेवम्भूतमस्तीति निश्चिनोति। (C 118b) ममैव प्रतीतिरेषा नास्य प्रतीतिरियमिति प्रतीतेः। अथ परोपि तदेव रू[1]पमवगच्छति। तथापि न सुखभोगी, प्रत्यक्षेण हि सुखोपभोगात् नानुमानेन। अत्रोच्यते।

गृह्णाति तत्पुनर्
नाऽस्यचमिति चेत् एष कुतो भेदः समर्थयोः ॥ (४५२)

प्रत्यक्षं हि स्वरूपसाक्षात्करणमेवेति प्रतिपादितं॥ ततः समानाकारयोरेष एव भेदो न युक्तः (।) कारणभेदादभेद इति चेत्। स्वरूपगत एव तर्हि भेदो यदि नाम कारणमन्तरेणोपपत्तिरिति कारणभेदोऽभ्युपगम्य[2]ते। भेदस्तु स्वरूपगत एव युक्तः। साक्षात्करणन्तु स्वरूपं द्वयोरपीति न कारणभेदो युक्तः। दृश्यते चेत्। स्वरूपभेदोप्यभ्युपगम्यता। ततः समानाकारता न युक्ता। अथ कारणभेदाद् बोधरूपता विशेषेपि प्रत्यक्षत्त्वात्।

अदृष्टैकार्थयोगादेः सम्विदो नियमो यदि।
सर्व्वथान्यो न गृह्णीयात्सम्विद्भेदोप्यपोदितः ॥ (४५३)

अथापि स्याददृ[3]ष्टवशादाकाराभेदेपि प्रत्यक्षेतरत्त्वनियमः। तथाह्ययोगादेकार्थसमवायतश्च। तथाहि। आत्मीयं सुखमात्मीयात्नसमर्थितं समवेतं परकीयन्तु न तथा। तेन परसुखवेदनेन सुखित्वं। यद्याकारभेदमन्तरेण साक्षात्करणसम्भवादपि प्रत्यक्षाप्रत्यक्षतालक्षणे नियमः। तदा प्रत्यक्षतायामपि प्रत्यक्षताऽप्रत्यक्षतानियम (C 119a) इति प्राप्तम्॥ तथा च सति किमन्यभेदादिपरिकल्पनया। अदृष्टयोगादेकमेव वस्तु तथान्यथा[4] च भविष्यति। सुखमेव दुःखादिकमिश्रितं। ततो न भेदो युक्तः। एतदप्यदृष्टभेदादेवेति चेत्। भवतु स्वसम्वेदनमाकारभेदोपि तथास्तु। तत एव सर्व्वथाऽन्यो न गृह्णीयात्। समानार्थतायामपि सम्विद्भेदोऽपोदित एव। चक्षुरादिकमपि स्पष्टभेदादेव परिकल्प्यते। तथाहि।

प्रथम स्पष्टतादृष्टिरत प्रत्यक्षतास्थिति ।
न प्रत्यक्षान्मया दृष्टमस्पष्टमिदमीक्षितम् ।

**स्पष्टतामेव लोकः प्रथम प्रति[5]पत्या विषयीकुर्व्वाणः प्रत्यक्षताभवगच्छति। यता· । सत्यपि चक्षुरादिकारणत्त्वे यदि वैशद्यप्रतिभासिताया नावगच्छति । किमपि मयाऽस्पप्टमेव दृष्टन्न न प्रत्यक्षेयं प्रतिपत्तिरिति लोकस्येयमेकवाक्यता । अथेंद्रियजत्वे प्रत्यक्षता स्पष्टतायामिति वदेत् ।। तथाहि।**

स्पष्टत्वाद् ग्रहण सम्यक् इन्द्रियात्सन्निधानवित् ।
तस्य द्वयस्यासद्भावाद् द्वयस्याप्ति कथञ्चन ।

**यदेव खलु सन्निहितत्त्वेन स्पष्टतया प्रतीते.[6] विषय स एव प्रत्यक्षसम्मतो लोकस्य, न चेन्द्रियात् विना सन्निधानप्रतीतिः । तदङगविकलत्त्वादप्रत्यक्षता भवेत् ।**

**तदेतदसत् । यत. ।**

न सन्निधानेतरते प्रत्यक्षेतरकारणम् ।
अन्यथा दूरदृष्टस्य (c 119b) गृध्रैर्न्नात्यक्षता भवेत् ।।

**तथाहि । कश्चिद्दूरदर्शी पुरुष. । कश्चिदन्यथा । तत किन्तयोः सम्वेदनस्य प्रत्यक्षेतरते । अथापि स्यात्तदेव तस्य विस्पष्टमदूरमिति गीयते ।**

दृष्टिशक्तिमपेक्ष्यैव दूरादूरव्य[7]वस्थिति ।
**यो हि यत्स्पष्टतया द्रष्टुमलम् । तदेव तस्यादूरमिति चेत् । यद्येवं**
स्पष्टदृष्टस्य सर्वस्य यद्यदूरत्त्वमुच्यते ।
तदभावेस्य दूरत्त्वमिन्द्रियन्नान्यकारणम् ।।

**तस्मात्समानस्पष्टावभासयोरिन्द्रियमनोविज्ञानयोर्न्न प्रत्यक्षेतरताव्यवस्थिति-रिति न्यायोपेतमेतत् । सर्व्वथा परसुखवेदनेपि साक्षात्करणेन सुखितो भवेत्। असाक्षात्करणे च साकारतया स्वसम्वेदनमेव ।**

येषाञ्च[8]योगिनोन्यस्य प्रत्यक्षेण सुखादिकं ।
विदन्ति तुल्यानुभवास्तद्वत्तेपि स्युरातुराः ।। (४५४)

**येषां** लोकायत मीमासकाना **योगिनः सन्ति** कणादादीना **ते नियमेन प्रत्यक्षेण परसुखादिकं विदन्तीति (।) तेपि योगिनो रागादियोगिनो भवेयुः । वा(स)र्वस्तु प्रपञ्चः कृत एव न पुनः क्रियते । अथ**

विषयेन्द्रियसम्पाताभावात्तेषां तदुद्भवः ।
नोदेति तयोरिति चेत्

**अथ यस्येन्द्रियविषयसन्निपा[9]ते सुखादिकमुदेति स एव सुखीत्यादिव्यपदेश-**

मर्हति। न च योगिन (:) स्त्र्यादिविषयसन्निकर्षात्सुखाद्युदयः ततस्तस्य न तथात्त्व। तस्य हि तत्सुखादिकं यदिन्द्रियविषयजनितं (C 120a)।

तदप्यसत्। यतः।

न वै दुःखसमुद्भवौ ॥ (४५५)

दुःखासम्वेदनं किन्तु दुःखज्ञानससुद्भवः।
[ दुःखोपकारयोर्हेतुर्नहि दुःखाद्यवेदने ॥४५६॥[१]

तथाहि। परस्परस्पर्शनेन्द्रियसङ्गमादुपजातं सुखं स्त्रीपुंसयोः किन्न साधारण रोमाञ्चादिकमुपजनयति। तथा चे[10]त्साधारणप्रतीततैव भवेत्। तस्मात्सम्वेदने सति सुखिता नान्यथा। न चोदयमात्र चक्षुरादिसंयोगो वा नास्तीति समान-सुखता द्वयोरपि भवेदस्वसम्वेदने। तस्य तत्र भावना नास्तीति चेत्। न। भावनाया. सुखोदयमात्रे व्यापारस्तच्चोत्पन्न सुखमिति तुल्यानुभवौ स्याता॥ तव कथमयम्विभाग इति चेत्। आह।

भासमान स्वरूपेण पीडा दुःखं स्वयं यदा।
न तदालम्बनं ज्ञान[11] तत्तदेव प्रसज्यते ॥ (४५७)

यस्य स्वसम्वेदनं सुखं स सुखी। यस्य तु सम्वेदनान्तरेण योगिनः परसुखाद्यालम्बनमात्रकं तस्य योगिनो न रागादियोगिता। तेन ते योगिनः तद्दुःखादिना नातुराः। अग्न्यादावनुभवे कथमातुरादितेति चेत्। योगिनान्तु तदभावात्। अन्येषां कम्भवतीति चेत्। न। बाह्यादीनां तथैव सम्वेद्यत्त्वात्। सुखादिकन्तु यत्स्व सम्वेदनेन[12]करोति न तदन्येनेति न तुल्यानुभवाः भवन्ति तद्विदः॥

भिन्ने ज्ञानस्य सर्व्वस्य तेनालम्वनवेदने।
अर्थसारूप्यमालम्ब आत्मवित्तिः स्वयं स्फुटः ॥ (४५८)

तदाकाराधानसमर्थं (C 120b) सम्वेदनस्यालम्बनम्। आत्मरूपन्तु स्वप्रकाशं वेदन अतः अर्थस्य स्वसम्वेदनमातुरीकरोति न तदाकारोपधानमात्रात्। को विशेषस्तयोरिति चेत्। न कश्चित्परमार्थतः। न हि सु[13]खस्य तदाकारस्य च कश्चिद्विशेषः। केवलमात्मा न वपु॰ (?) तेन मन्यमानो दु.ख्यहमिति व्यवस्यति (।) योगी तु न तथेति न तथास्य सुखिता। तस्माद्विज्ञानं स्वसम्वेदनमेवान्यथा सुखादिविभागासम्भवः॥

ननु च प्रज्ञादयोपि भावनाविशेषादेव. न च तेषा विलक्षणत्त्वं प्रतिभासमाना-

---

[१] सुदुग्-बुसुङ-लु-ल-सोग्स् म्योड् मिन्-पर्। गुडुङ् दड् फन्-ऽदोग् ग्युं-म-यिन्। इति भोटभाषान्तरे ऽधिक।

दर्थात् । न चासावर्थः प्रज्ञादिस्वभावः । तत्र भावनाया अप्रवृत्तेः । नहि तत्रार्थ[14]स्य भावनाभिसंस्कारिका । तस्मादर्थव्यतिरिक्ता परा प्रज्ञा न सा साकारा ॥

ननु प्रज्ञादयो न विज्ञानस्वभावास्ततस्तदनाकारतायामपि न विज्ञानमनाकारं । तदसत् ।

तत्त्वप्रविचय प्रज्ञा कथन्तत्त्वाग्रहेपि सा ।
अर्थग्रहेप्यनाकारा सा चेदज्ञानमप्यत ।

यदि तदर्थविशेषग्राहिण्यपि प्रज्ञा निराकारा विज्ञान(म)प्यर्थग्राहि किन्न निराकारं । निराकारमस्तु तदपीति चेत् ॥ (c 121a)

[ अपि चेन्नास्ति प्रत्यक्षं धीर्हि लिंगाद् व्यवस्यति ।
तेपीन्द्रियार्था धीरथ मानसं प्राक् प्रसज्यताम् ॥४५७॥ ][१]
कार्यकारणसामग्र्यामस्यां सम्बन्धिनापरं ।[15] 22a
सामर्था[?र्थ्या]दर्शनात्तत्र नेन्द्रिय व्यभिचारतः ॥ (४६०)

तच्च लिङगमक्षादिकमेव मनस्कारपर्यन्तं । अन्यस्य सम्बन्धिताभावात् । अर्थापत्तिरपि सम्बन्धिदर्शनादेवान्यथा नोपपद्यत इति तस्यावृत्तेः । तत्र तावन्नेन्द्रियं व्यभिचारतः । अव्यभिचारि हि लिङगन्न चेन्द्रियमन्यथा नो घटते कारणत्त्वेनाभ्युपगमात् । समर्थता चा[1]दृष्टकार्यस्य न निश्चीयते । तथार्थ. । तस्यापीन्द्रियवदेव व्यभिचारः ।

( अर्थोपि )* धीमनस्कारौ ज्ञानं तौ च न सिध्यतः ।

धियोसिद्धत्त्वादलिङगता । साध्या हि सा । मनस्कारस्तु सैव पूर्व्वा धीः । सा चोदयकाले न सिद्धाऽन्यदा कथं सिध्येत् । यतः ॥

नाप्रसिद्धस्य लिङ्गत्त्वं

प्रसिद्धेन हि लिङगेन भवितव्यमन्यथा लिङगत्त्वे सर्व्वमेव लिङगमिति सर्व्वं सर्व्वस्य सिध्येत् ॥ अथापि स्यादर्थस्तावद्व्यक्तः प्रत्यक्षप्रसिद्ध एव । अन्यथा यो[2] नामास्तीति व्यवहारोपि न स्यादित्यर्थमूकं जगत्स्यात् । न च व्यक्तोऽर्थोऽर्थसत्तामात्रादन्यथा सर्व्वव्यक्तिप्रसङगेन सर्व्वं सर्व्वदर्शित्वप्रसङ्गः । (c 121b)

---

[१] ग्शन्-यङ् म्ङीन्-सुम्-मेद्-पस्-न । ब्लो नि र्तगस्-लस् र्तोग्स्-पर् ऽग्युर् । दे-यङ् द्वङ्-पो दोन्-नम् ब्लो । यङ्-न यिद्-ब्येद् स्ङ-मर् ऽग्युर् ॥
* भोटभाषान्तरत ।

तस्मात्स्वतो व्यक्तत्त्वमर्थस्य सा बुद्धिः। अत एवाह। नह्यज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते। ज्ञाते त्वनुमानादवगच्छतीति।

अत्रोत्तरं।

व्यक्तिरर्थस्य चेन्मता। (४६१)

लिङ्ग तदेव न ज्ञान व्यक्तोर्थोनेन वर्ण्णितः।

व्यक्तावननुभूतायां तद्व्यक्तत्त्वाविनिश्चयात्॥ (४६२)

यदि व्यक्ते[3]लिङ्गमथापि व्यक्तोऽर्थः सर्व्वथा व्यक्तयनुभवे न प्रयोजनं। व्यक्त्यनुभवपुरस्सरत्त्वाद्व्यक्तानुभवस्य एकदा स्वतन्त्रा व्यक्तिरनुमीयतेऽन्यदा विशेषणभूता। सर्व्वथानुभवेन भवितव्यं प्रत्यक्षत.। अनुमानेनानुभवेऽनवस्था। सा चार्थस्य व्यक्तिः प्रत्यक्षा. बुद्धिरपि प्रत्यक्षैव। तस्मात्परोक्षतया व्यक्तेरर्थः परोक्षएव भवेत्। ततो न लिङ्गम्। अथ कर्मतया प्रतिभासमानोऽर्थो ग्राह्यतापरनामिकलिङ्गं[4] (।) नहि कर्मता क्रियामन्तरेण भवति। बुद्धिश्च क्रिया। तदाह

सा बहिर्द्देशसम्बद्ध (?।) प्रत्यक्षमुपलक्ष्यते।

तत्रोच्यते।

क्रियाकृते विशेषे हि कर्मता नान्यथा क्वचित्।
क्रियाकृतो विशेषश्चेत् क्रियामात्रेनुमाभवेत्॥

यदि कर्मता नाम क्रियाकृतो विशेषः क्रियामात्रमेवानुमीयताम्। न बुद्धिक्रियानुमानं। न चान्या काचित्क्रिया पदार्थरूपात्। तथा हि।

कर्मस्था वा क्रियोच्येत कर्तृस्था वा (C 122a) परा न हि॥
क[5]र्त्तस्था कर्त्तृतो नान्या कर्मस्था नास्ति कर्मत।

ततो न दर्शनं दृश्यमानादन्यतो वा परं। अथ ग्राह्यतयाऽर्थ एव वेद्यते बुद्धिस्तु ग्राहकतयैव। एवं हि प्रतीतिर्मया बुद्ध्यानुगृहीतोऽर्थ इति।

तदप्यसत्।

कारणत्त्व तदा बुद्धे ग्रहणन्तु तत. पर।
तदेवास्तु परा बुद्धि किमर्थमुपकल्प्यते॥
दर्शन परमार्थाच्चेत् गृह्येत द्वयरूपता।
अथार्थस्यैव कश्चित्स विशेषो व्यक्तिरिष्यते॥

क्रिया कुतः[6] तदा।

नानुत्पादव्ययवतो विशेषोऽर्थस्य कश्चन॥ (४६३)

नहि बुद्ध्या गृह्यमाणोऽर्थ उत्पत्तिमान् तदाङ्गीक्रियते। सिद्धोपस्थायी हि

ग्राहकप्रत्ययः। यथास्तीति ग्रहणमात्रमेव बुद्ध्या क्रियते। न च गृह्यमाण एव विशिष्टो भवति। अन्यरूपग्रहणे भ्रान्तता भवेत्। तद्रूपग्रहणे च पूर्व्वापररूपताग्रहणप्रसङ्गः।

दीपादयो घटादीनां स्वकालासङ्गतौ यथा।
व्यञ्जकाज्ञानमप्येवं तुल्यन्तत्रापि चोदनं।

यदि यथाविधोर्थः[7] तथाभूत एव प्रदीपेनाभिव्यज्यते तेनापि सकलकलाव्यापकस्वभावव्यञ्जकेन भाव्यमन्यथा भ्रान्तिमात्रकं। अथ ग्रहणकालेऽन्यथाऽर्थ उत्पद्यते। तदा।

तदिष्टौ वा प्रतिज्ञानं क्षणभङ्गः प्रसज्यते।

यद्यसाववबोधरूपव्यावृत्त एवोत्पत्तिमान् स्वसम्वेदनमेव ज्ञानसमानकालतया क्षणिकमिति (c. 122b) किमपरार्थपरिकल्पनया। ननु ग्राहकत्त्वेन बुद्धिः प्रतीयते. ग्राह्यतयाऽर्थ[8] इति प्रतिपादितं। सत्यं प्रतिपादितं यद्यर्थो विचलितरूपो भवेत्। यदा तु तथाभूत एवोदयवान् तदा स एव तथा भूतउत्पत्तिमानिति ब्रुवन्नेवं कथमर्थस्य ग्राह्यतां परां ब्रूयात्। मया बुद्ध्या गृहीत इति च व्यपदेशो न किञ्चित्प्रतीत्योत्पादमात्रादपरं प्रतिपादयति। तदाह। सर्व्व एव वस्तुसम्बन्धो जनस्यैवोपयोगविशेषवशात्। कार्यकारणभावलेशविशेषतोन्यत[9]या व्यवस्थाप्यन्तेऽवस्थाविशेषख्यापनार्थं। न तु व्यपदेशादेव वस्तुसिद्धिरन्यथापि तस्योपपत्तेः। तथा हि।

अर्थोयं पूर्वमप्यासीन्निजकारणभावितः।
ततोस्य दृष्टिर्जातेयमिदानीन्तत्र वस्तुनि।
न प्रत्यक्षानुमानाभ्यामस्यार्थस्य प्रतीतता।
तल्लोकव्यवहारोयं परमर्थपरंपरा।

अपि चार्थस्य विशेष एव यदि कश्चिद् ग्राह्यता तदा।

स च ज्ञातोऽथवाज्ञातो भवेज्ज्ञात[10]स्य लिङ्गता। (४६४)
यदि ज्ञाने परिच्छिन्ने ज्ञातो साविति तत्कुतः॥

ज्ञातत्वेन परिच्छित्तिर्यदि तद्रूपमेव तत्।
अपार्थक्यपरा बुद्धिस्तद्विशेषस्तथोच्यताम्।

ज्ञातत्वेन परिच्छिन्नमपि तद्गमकं कथम्॥ (४६५)

ज्ञातोर्थं इतिजानानो ज्ञानमित्यवगच्छति।
अर्थं इत्येव जानानस्तदर्थत्त्वस्य वेदिता॥

तद्रूपवेदनेर्थाना ताद्रूप्यस्य व्यवस्थिति ।
शुक्ल (त्व) वेदनेऽर्थस्य कि शौक्ल्यम[11]पर तत ॥

(C 123a) इत्युक्तमेवैतत्। अथ दृष्टिरपरैव तदा दृष्ट इति न परिच्छेद॰। तदाह।

अदृष्टदृष्टयोन्येन दृष्टादृष्टा न हि कचित् ।

यदि दृष्टादपरा दृष्टिरदृष्टा कथं दृष्टरूपपरिच्छेद.। अन्यथान्यदृष्टेपि दृष्टव्यवहारोऽन्येनाय दृष्ट इति यथा मया दृष्ट इत्यर्थदर्शनमात्रादर्थविशेषस्य दृष्टिस्तस्य दर्शनात्। तथा स विशेषोऽन्यदृष्टावपि नियतभावीति भवेदन्यदृष्टमेतदिति। अथैष एवासौ न भवति विशेषस्तेन परदृष्टविशेषादर्शनादात्म दृष्टदर्शनाच्च स्वदृष्ट इत्येव प्रतीति॰।

तदप्यसत्। यतः।

विशेषः सोन्यदृष्टावप्यस्तीति स्यात्स्वधीगतिः ॥ (४६६)

यद्यपि विशेषा बहवस्तथापि तेषा स्वसम्वेदनत्वाभावात्तैरपि दृष्टैरेव भवितव्यम्। तत. स्वपरधीगतिः स्यात्। तस्मात्स्वसम्वेदनेन भवितव्यम्। दृष्टत्वेन। अथ सोप्यन्येन दृश्यते सम्वेदनेन तथा सति तत्रापि दृ[13]ष्टतेत्यनवस्था। अथैकमेव दृष्टत्वन्तथा सति स विशेषोन्यदृष्टावपि स एव स्वधीगतिरेव स्यात्। यदा भावात्परस्य दृष्टत्वं परेण प्रतीयते तदात्मदृश्यत्वाभावेपि परदृष्टत्व-(C 123b) दर्शनात् स्वधीगतिर्भवेत्। नहि तस्य दृष्टत्वस्य स्वपरापेक्षया विशेषः। अथ स्वयमपि दृष्टत्वमस्त्येव तत॰ स्वधीगतिः। न। स्वदृष्टपरदृष्टयोर्व्विशेषाभावात्। स्वदृष्टत्वं स्वदृष्टिसम्बन्धप्रतीतौ ज्ञायते। तदप्रतीतौ तु[14] स्वदृष्टमित्येव कुत॰। तस्मात्स्वयमदृष्टेपि परेण दृष्टताप्रतीतौ स्वधीगतिर्भवेत्। अथ य एव दृष्टत्वं प्रतिपद्यते तस्य स्वधीगतिसम्भवेपि न दोषः। नहचत्र काचित् क्षतिः। मा भूत् क्षतिस्तथापि वस्तुतत्त्वमेवं न भवतीति क्षतिरेव॰। तथा हि।

प्रतीयते(ह्य)ऽदृष्टत्व ममान्यस्येति वा कुत ।
न (हि)तत्र परापेक्षा केनचिद्विनिवार्यते ।
स्वसम्वेदनभावेतु विनिवार्या भवेदिय ।
स्वसम्वेदनमन्यस्य सम्वेद्य[15]मिति साहस ॥

एतदेव स्वसम्वेदनं यदन्यागोचरत्वे सति प्रकाशनन्नाम।[16] 22b

तस्मादनुमितिर्बुद्धेः स्वधर्मनिरपेक्षिणः ।

केवलान्नार्थधर्मात्कः स्वधर्मः स्वधियो परः। (४६७)
यः प्रत्यक्षो धियो हेतुः

बुद्धयाश्रितेन हि केन चित् स्वबुद्धेरनुमानं। साधारणस्य हि विषयादिधर्मस्य साधारणानुमेयस्य प्रतिपादनमेव। तस्मादात्मधर्मेणात्मबुद्धेरनुमापकेन भवितव्यम्। स्वधर्मश्च नापरो बुद्धिरस्ति। बुद्धिरेव यदि पर स्वधर्म.। सा चाप्रत्यक्षा कथमनुमापिका भवेत्। अथ सुखादयो (c 124a) बुद्धिसमानसामग्रीजन्मानः तैर्बुद्धयनुमानमात्मधर्मत्वात्तेषा। अत्राह।

तुल्यकारणजन्मनः (।)
तस्य भेदः कुतो बुद्धेर्व्यभिचार्यन्यजश्च सः॥ (४६८)

यदि विषयक्रियादिसामग्रीजनित सुखादि सम्वेदनस्वभावमेव सकलमिति प्रतिपादित। अथ दृष्टे विषये सुखमुत्पत्तिमदत. स्वबुद्धयनुमानं तदपि सुख परस्य[1] न भवतीति कुत.। परस्य सुख परेण कथं प्रत्ये[2]तु शक्यं।

अस्वसम्वेदनत्त्वे हि विभागोय कथम्भवेत्।
भयादेरपि रोमाञ्च उपजायत एव हि॥

यदि सुखादयः स्वसम्वेदनत्वेनावस्थिताः परसम्बन्धिनः तदा न प्रतीयन्त इति युक्तम्। अन्यथा तु परसम्बन्धितां को निवारयेत्। मम रोमाञ्चजनकास्ततो ममैवेति चेत्। एतदपि कुतः। न हि परयोषिन्न जनयति सुख। सम्वेद्यमानो हि सुखाद्यात्मा जनयति रोमाञ्चादिकं स्वसम्बन्धा(द)न्यथा वेति क्वेद[3]मुपयोगि। स्वेन सुखेन रोमाञ्चादिजनने प्रसिद्धे स्वसम्बन्धिताप्रतीतिः। स्वसम्बन्धिताप्रतीतौ तेन जननमितीतरेतराश्रयदोष.। अपि च। बुद्धयन्वयव्यतिरेकानुविधायी तत्कारणानुविधायी वा बुद्धेरनुमापको भवेत्॥ तत्र।

रूपादीन् पञ्च विषयानिन्द्रियाण्युपलक्षणम्॥
मुक्त्वा न कार्यमपरं तस्याः समुपलम्बते॥ (४६९)

बुद्धिसमानसामग्रीजन्मान इन्द्रियादयो बुद्धिर्व्वोत्तरा[4]॥

तत्रात्यक्षं द्वयं पंचस्वर्थेष्वेकोपि नेक्ष्यते।
(c 124b) रूपदर्शनतो जातो यो न्यथाव्यस्तसम्भवः॥ (४७०)

द्वयमत्यक्षमितीन्द्रियमुपलम्भनञ्च पञ्चस्वर्थेष्वेकोपि रूपादिषु तथाभूतो नेक्ष्यते। यो रूपदर्शनादुपजातः। नहि रूपादयो रूपदर्शनतो जायन्ते कारणान्तरादुपजातत्वात्। रूपदर्शनजातत्त्वे तु तत्त्वमेव तथानुभवेत्। तथा हि

रूपदर्शनमर्थाना सर्व्वेषामेव सम्भवेत् ।
प्रतिप्राणि[5] विभिन्न स्यात्तथार्थोपि तदुद्भवात् ।।

**यथा रूपदर्शन प्रतिप्राणि भिद्यते तथा रूपादयोपि। तयोर्यदि(—)**

सर्व्व एवोपलभ्येरन् तद्विशेषावधारणे ।
नानावभासितज्ञान प्रतिप्राणि प्रसक्तिमत् ।
प्रतिघ(?)मुपलम्भे तु ज्ञानतैव स्ववेदने ।।

**यदि सर्व्व एव प्रतिप्राणि विभिन्नस्वभावा रूपादयः सर्व्वैरुपलभ्येरन्ननेकरूपाभ्युपलम्भो युगपद् भवेत्। न चास्ति तथा. तदयन्तावदपक्ष ए[6]व। अथ स्वदर्शनजनितमेव रूपादिकमुपलभ्यते तथा सति परेणासम्वेदनादर्थतैव हीयेत स्वसम्वेदनाभ्युपगमे।। अथ परेणोपलभ्यते तथा सति तज्जनितेन तस्यापरेण विशेषेण भवितव्यम्। सोपि परेणोपलभ्यते तस्याप्यपरेणेत्यनवस्था। तस्मात्स्ववेदनेना स्वसम्वेदनेन च यदेवमप्रतीतं तल्लिङगमित्यतिसाहसंम्। न खल्वप्रतीतस्य लिङगता। ततश्च लिङग[7]लक्षणाभावादनुमानेन (C 125a) प्रतीयतेबुद्धिरित्यसदेतत्। भवतु नामार्थस्यान्यस्य वा प्रतीतिस्तथा सति।**

[ तथैव यदविज्ञातं लिंगमित्यतिसाहसम् । ][1]
विद्यमानेपि लिङ्गेतत्तेन सार्द्धमपश्यतः । (४७१)
कथं प्रतीतिलिङ्ग हि नादृष्टस्य प्रकाशकम् ।।

**दृष्टस्यैवाग्नेः स्वप्रसवेन धूमादिनानुमानन्नान्यथा। न खलु दृष्टस्य प्राक् पावकस्य धूमोनुमापको दृष्टो दृष्टः।।**

तत एवास्य लिङ्गात्प्राक् प्रसिद्धेरूपवर्णने । (४७२)
दृष्टान्तान्तरसाध्यत्त्व[8] तस्यापीत्यनवस्थितिः ।

**न ह्यनुमानं दृष्टान्तं प्रत्याचष्टे। तथा सत्यनुमानमेव न स्यात्प्रत्यक्षवत्। प्रत्यक्षस्य लक्षणान्तरमस्तीत्यनुमानत्त्वेऽस्यापि समानं। तस्मात्तदपि दृष्टान्तसाधकमनुमानं दृष्टान्तान्तरात्तदपि तदन्तरादित्यनवस्था नाम प्रतिपत्ति.। अथार्थापत्त्या तत्साधन न कस्यचिदेवं प्रतीतिः। नह्यर्थ एव न घटते यदि प्रतीतिर्न्न स्यादिति कस्य चित्प्रतीतिः। प्रतीतोर्थो[9] नोपपद्यते यदि प्रतीतिर्न्न स्यादिति चेत्। केयं प्रतीतता नाम। प्रतीत्या विषयीकृतत्त्वञ्चेत्। ननु प्रतीतेरप्रतीतौ तदेव प्रतीत्या विषयीकृतत्व चिन्त्यम्। पुरोवर्त्तिता चेत्। न। पुरोवर्त्तितापि कथमप्रतीता प्रतीतिं साधयेत्। प्रतीता चेत् तत्राप्यपरा पुरोवर्त्तितेति तत्रानवस्थोक्तैव। तस्मात्पुरोवर्तितान्यो बाधकः प्रकार प्रतीतिसिद्धौ न लिङगम्।**

---

[1] दे-ल्तर् शेस्-मेद् गङ यिन्-ते । तँग्स्-शेस्-व्य-व बब्-छोल् यिन् ।

इत्यर्थस्य धि[10]यः सिद्धिः नार्थात्तस्याः कथञ्चन । (४७३)

(c 125b) तदप्रसिद्धावर्थस्य स्वयमेवाप्रसिद्धितः ।

बुद्धेरर्थसिद्धिरबुद्धिकार्थसिद्धौ सर्व्वः सर्व्वदर्शी भवेत् । यदि बुद्धिरात्मान वस्तुनि सव्यापारं पश्यति तदार्थः प्रतीत इति भवेदन्यथा न किञ्चित्प्रतिपन्नमिति स्यात् । स्वयमेव वा सर्व्वं प्रतीयते । तस्मान्नार्थाद्बुद्धिप्रसिद्धि । पूर्व्वोक्तदोषप्रसङ्गात् ॥

प्रत्यक्षाञ्च धियं दृष्ट्वा तस्याश्चेष्टाभिवादिक । (४७४)

पर[11]चित्तानुमानञ्च न स्यादात्मन्यदर्शनात् ॥

सम्बन्धस्य ॥ यदि प्रत्यक्षेणात्मनि बुद्धितत्सम्बन्धिनोः कथञ्चित्प्रतीतिस्तदा तत्सम्बद्धलिङ्गदर्शनात्परत्रापि बुद्धेरनुमानम्भवेत् अन्यथा न युक्त । परेण दृष्टोर्थ इत्यनुमानञ्चेत् । स्वदृष्टस्य कुतः प्रतीतिः । अनुमानत एवेति चेत्(।)तदाप्यपरो दृष्टान्त इत्यनवस्था । प्रत्यक्षेणैव प्रतीयत इति चेत् । ननु प्रत्यक्षमर्थं नीलादिक प्रत्येति कथ दृष्ट[12]त्व । स्वसम्बन्धितामपि प्रत्येतीति चेत् । स्वसम्बन्धिता तर्हि दृष्टत्त्व तच्चेत्प्रतीयते (।) आत्मनि तेन स्वसम्वेदनप्रतिपन्न स्यात् । तस्य परेण प्रतिपत्तावनवस्था । तत्रापि दृष्टता तथैव प्रतीतिविषय इति । ततोर्थो दृष्टः । प्रतीतिदृष्टा प्रतीतिप्रतीतिरीतिरित्यादि. यदा च प्रतीति प्रत्येति तदा न दृष्टता, प्रतीतिरेव दृश्या तदा भवेत् । तस्माद्विषयमात्रमेव प्रतीयते न दृष्टता नामेति नार्थापत्तित्त्वं । अर्था पत्ते[13]रुत्थानं । अपि च । (c 126a)

मनोबुद्धावर्थोपि नास्ति कस्य लिङ्गता* (।) (४७५)

नहि तस्य प्रत्यक्षता येन तत्रार्थस्य लिङ्गता (।) नहि स्मरणमेथ प्रत्यक्ष । ततो मनो बुद्धावर्थलिङ्गप्रसिद्धित. कथमनुमानमित्युपस्कारः । वअ तत्राप्यर्थ एव जात्यादिक· प्रतिभाति ततोनुमान (।) दत्तमत्रोत्तरम् । न च प्रमाणन्तदिति कथमर्थ. प्रतिभासते । प्रतिभासमानो दृश्यते सत्यो सत्यो[14] वेति यदि परं विवाद इति चेत् । केयमसत्यता नाम । या विसम्वादिता । न. तद्रूपे विसम्वादाभावात् । तेन रूपेणावश्यमेव सत्येन भाव्यं । असत्यव्यवहारादसत्यमिति चेत् । कोय व्यवहारः । प्रमाणं चेत् । प्रमाणेन प्रतिपन्न कथमसत्यं । असत्यतयैव प्रतिपन्नञ्चेत् । न. असत्यतायान्तद्रूपव्यतिरेकेणाप्रतीते. । स्वरूपमात्रकमेव प्रतीयते न परा[15]र्थक्रियेत्यपि न सङ्गतं । तथा सति स्वसम्वेदनप्रसङ्गात् । परेण वेद्यते चेत् । 23a
न । स्मरणस्य दृष्टतायामभिनिवेशात् । पूर्व्वरूपता च नास्येति न प्रतीतिरस्य ।

---

*यिद्-क्यि ब्लो-ल दोन्-ग्यि र्तंग्स् । रब्-तु-ग्रुब्-प योद्-मिन्-फ्यिर् (=मनसो धियामर्थलिंगप्रसिद्धेरभावत ।)—इति भोटभाषान्तरे पाठ ।

अथैतदपि विषयीकरोति। न तर्हि स्मरणं। स्वसम्वेदनन्तु प्रत्यक्षमत्रेति युक्तं। तथा हि प्रतीतिर् [?र्] ममेयमेवमिति व्यवहारः। प्रमेयरहिता प्रतीतिरेवासत्यता (c 126b)। नालौकिकादित्त्वं, तथा व्यवहाराभावात्। अपि च बुद्धचन्तरेणार्थापत्त्यार्थेन वा।[1]

प्रकाशिता कथम्वा स्यात् बुद्धिर्बुद्धयन्तरेण वः।

बुद्धयो हि परस्पर प्रकाशिकाः कथं। यतः॥

अप्रकाशात्मनोः सा स्याद् व्यङ्ग्यव्यञ्जकताकुतः॥ (४७६)

न ह्यप्रकाशात्मनोः परस्परेणान्यथा वा व्यङ्ग्यव्यञ्जकताभावो युक्तः। प्रकाशेन हि प्रदीपात्मना पटादयोऽप्रकाशा॰ प्रकाश्यन्ते नान्यथा॥

विषयस्य कथं व्यक्तिः प्रकाशेरूपसक्रमात्।

प्रकाशे हि स्वयन्तदर्थस्य संक्रमात्प्रकाशनं तद्यथा॰ प्रदीपप्रभादौ सक्रान्तस्य घटादे॰ प्रकाश॰नम्॥

स च प्रकाशस्तद्रूपः स्वयमेव प्रकाशते॥ (४७७)

यथा तर्हि घटस्यान्यद्रूपमन्यत्प्रभायास्तथान्यद्विज्ञानस्य रूपमन्यद्रूपादीना।

तदेतदसत्।

भवत्येवन्तथाप्यस्य सम्विद्बाह्यप्रदीपवत्।

नहि सम्वेदनाभावे द्योत्यद्योतकतागति॥

यद्यपि नामान्यता विज्ञानविषयोस्तथापि प्रदीपवदेव स्वप्रकाशेन विज्ञानात्मना भवितव्यम्। अथ तद्वदेव विज्ञानान्तरबाह्यता।

तदसत्।

यदि स्वस्माद्विभिन्नेन विज्ञानेनास्यवेदनम्।

तत्सधर्मतयैवास्या बाह्यत्त्वमपि सम्विद॥

अथास्य नास्ति बाह्यत्त्व स्वसम्वेदनता न किम्।

व्यतिरिक्तेन (c 127a) तस्यापि नालोकेन प्रकाशन।

अत एवाह॥

तथाभ्युपगमे बुद्धेः बुद्धौ बुद्धिः स्ववेदिका।

सिद्धान्यथा तुल्यधर्मो विषयोपि धिया सह॥ (४७८)

यदि प्रकाशायां स्वयं बुद्धौ बुद्धेः संक्रमात् प्रकाशा बुद्धिर्बुद्धया स्ववेदिका तर्हि बुद्धिरन्यथा। बुद्धेरन्यप्रकाशताया तुल्यधर्मत्त्वात्तत्सरूपतया विषयो[4]पि प्रकाशको बुद्धेः स्यात्॥

इति प्रकाशरूपा नः स्वयं धीः सप्रकाशते ।
अन्योस्यां रूपसंक्रान्त्यां प्रकाशः सन्प्रकाशते ॥ (४७९)

एवमेव प्रकाश्यप्रकाशकभावो रूपबुद्ध्यो. । यद्वुतैकं स्वप्रकाशमन्यस्य तद्रूपतयोत्पत्तिः ।

ननु भवतु स्वप्रकाशा बुद्धिरेकान्या तु प्रकाश्या सादृश्यसम्भवात् । यथा पितृ-रूप गृह्णातीति । तदाह ।

सादृश्येपि हि धीरन्या प्रकाश्या न तया मता ।
स्वयं प्रकाशनादर्थस्द्रू[5]पेण प्रकाशते ॥ (४८०)

अप्रकाशस्य हि प्रकाशनमन्येन प्रकाशस्यैव । साधर्म्यमात्रात् । अप्रकाशस्यापि न परमार्थत· प्रकाश. । कथमर्थः प्रकाशते । अर्थस्तद्रूपेण प्रकाश(क)रूपेण प्रकाशते नत्वन्येन प्रकाश्यते । बुद्धचा च स्वप्रकाशत्वं द्वयोरपि समानमतो न प्रकाश्य-प्रकाशकभावो ।

यथा प्रदीपयोर्दीपघटयोश्च तदाश्रयः ।
व्यङ्ग्यव्यञ्जकभावेन व्यवहारः (C 127b) प्रतन्यते । (४८१)

नहि[6] प्रदीपयो. सारूप्योत्पत्तिसम्भवेपि परस्परं प्रकाश्यप्रकाशकभाव ।

दीपघटयोस्तर्हि कथम् । प्रदीपसामग्रीतो घटस्तद्रूप उत्पद्यतेऽतः सोपि स्व-प्रकाश एव प्रकाश्यते नान्यथा। तथान्वयव्यतिरेकपरिकल्पितापोद्धारतस्तथा व्यवहारो न परमार्थत इत्यलं प्रसङ्गेन।

विषयेन्द्रियमात्रेण न दृष्टमिति निश्चयः ।
तस्माद्यतोयं तस्यापि वाच्यमन्यस्य दर्शनम् ॥ (४८२)

यदि विषयेन्द्रियमात्रत एव दृष्ट इति[7] निश्चयो भवेत् । सकलमेव दृष्टमिति निश्चीयेत। दृष्टमेव दृष्टमिति निश्चीयत इति चेत्। किमिदं दृष्टन्नाम। यत्र दर्शनमुत्पन्नं। किमिदं दर्शनमिति। तदेव पर्यनुयुक्त। यत्राभिमुखं चक्षुरादिकं। चक्षुरभिमुखमिति कथं प्रतीयते। तत्रापि दृष्टत्त्वेन व्यवहारः कथमित्यनवस्था। अथ दर्शनोत्पत्तिमात्रतो निश्चयः। नानुभूतत्त्वेन निश्चयात्। न चानुभवमात्रा-दननु[8]भूत इति निश्चयः। नहि शुक्लताननुभवे शुक्ल इति निश्चयः। तस्मा-द्यदनुभवानुसारी निश्चयस्तथाभूतेनैवानुभवेन भवितव्यमिति निश्चयो युक्तः॥

स्मृतेरप्यात्मवित्सिद्धा ज्ञानस्यान्येन वेदने ।
दीर्घादिग्रहणान्न स्याद्बहुत्त्वानवस्थितेः (C 128a) ॥ (४८३)

न केवलं विषयज्ञानत(ज्)ज्ञानविशेषात् स्वसम्वेदनं। स्मृतेरपि तत्सिध्यति।

ननु स्मृतेरनुभवमात्रं सिध्यति न स्वसम्वेदनम्। अन्येनापि सम्वेदने स्मृ[9]ति-र्युक्तैव।

तदनुत्तरं। अन्येन वेदने ज्ञानस्य दीर्घादिग्रहणन्न स्यात्। बहुमात्रानवस्थानात्। यथा ह्रस्वद्वयनिरन्तरप्रयोगे तदनवस्थाने नानवस्थितमवस्थितेन सहैकत्वेन प्रतीयत इति प्राक् प्रतिपादितम्। दीर्घप्लुतमात्रादेर्ग्रहणन्न स्यादेव। एकैकमात्राग्रहणे न दीर्घादिग्रहणं। नापि समुदाय· प्रतीयते। पूर्व्वापरसङ्कलनेन प्रतीतिरिति चेत्। न। तस्यापि प्रतीतविषयत्त्वा[10]त्।

ननु प्रतीत एव दीर्घादिलक्षणोर्थः प्रतीतः किन्तु दीर्घादिलक्षणोर्थो न प्रतीतः। ततः क्रमद्वयमिव मात्राद्वये तदिति प्रतीयते। नापरो दीर्घः।

ननु यस्यापि स्वसम्विदिता बुद्धिस्तस्यापि कथन्दीर्घादिग्रहणं। तदाकारैकबुद्धिसम्वेदने दीर्घवेदनव्यवस्था। अस्वसम्वेदनवादिनोपि तर्हि तदाकारैकबुद्धिवेदनमस्त्येव। केवलमन्यया बुद्ध्या। न चानयोरवस्थयोर्व्विशेष[11]स्तथाहि।

अन्येन वेद्यते वेद्य वेद्यत्त्वाद्वद्यबाह्यवत्।
ततो बुद्धिरपि प्राप्ता वेद्यत्त्वादन्यवेदिका।[11]

तदसत्। यत (c 128b) एवमपि स्यात्।

अन्येन व्यज्यते व्यङ्ग्य व्यङ्ग्यत्त्वाद्घटवस्तुवत्।
ततोन्यद्योत्यता प्राप्ता प्रदीपस्यापि साप्रत।

उक्तञ्चात्र किञ्चित्। यद्यन्यया बुद्ध्या पूर्व्विका बुद्धिर्वेद्येत। तदान्यतदाकारबुद्ध्यवेदनाद्विषयस्य च तदाभावादवेदनमेवेति· उत्सन्नोनुभवोर्थिन इति प्रतिपा[12]दितं। अथापि स्यादनवस्थानमेव नास्ति मात्राणां। ततो न दीर्घाद्यग्रहणम्।

## १५, शब्दनित्यत्वनिरासः

तदप्यसत्। यत(:)।

अवस्थितावक्रमायां सकृदाभासनान्मतौ।
वर्णः स्यादक्रमो (ऽ)दीर्घः

न ह्यवस्थितम[13]क्रमेण प्रतीयमानं दीर्घम्भवति। कालक्रमेण प्रतीयमाने दीर्घमिति व्यवस्थानात्। क्रमोपि मात्राणामस्त्येव नान्त्यावस्थायां दीर्घ इत्यादिप्रतिपत्ति·। तदा च क्रमः प्रतीयमानो नान्यथैवासौ पूर्व्विकाया बुद्धेः। अथैकैवाऽसौ पूर्व्वापरभागग्राहिणी।

तदप्यसत्। तथा हि।

क्रमवानक्रम कथ। (४८४)

उपकुर्यादसंश्लिष्यन्वर्णभागः परस्परं (।)

पूर्व्वापरो हि वर्णभाग पर[14]स्परमनवस्थायित्त्वेनासङगत.। कथमेकां बुद्धिमुपकुर्व्वीत। विषयाग्रहण हि बुद्धिर्व्विषयभेदे च बुद्धिभेदोपीति नैका बुद्धिरिति कथ क्रमप्रतीति। तथा चाह। नहि।

अक्रमेण ग्रहादन्त्यक्रमवद्धीश्च नो भवेत्। (४८५)

तज्ज्ञातेर्थे बुद्धिमुपलभते। ज्ञातेत्वनुमानादवगच्छति। यथा चासावर्थ ज्ञानानुसारेण कल्प्यते तथा तद्भेदवत्त्यपि (C 129a)। तथाहि। लोको व्यपदिशतीदानी मम बुद्धिरुत्पन्ना। अथैक एवासावर्थात्मा दीर्घादिक. प्र[15]तीयते। दीर्घादिहर्चेक एव प्रथममुत्पद्यते। ततो दीर्घस्यैकस्यैव प्रतिपत्तौ दीर्घा बुद्धिरप्येकैव।

तदप्यसत्। यत.।

आन्त्यपूर्व्वस्थितादूर्ध्वं वर्त्तमानो ध्वनिर्भवेत्।

कश्चि(द्)यद्येक एवासौ वर्णात्मा तदा प्रथमबुद्ध्यैव प्रतिपन्न इति कालक्षेपो न स्यात्। पूर्व्वभागवर्णे चात्यबुद्ध्यापि प्रतीयेत दीर्घादिः। अथापरापरभागप्रतीत्या दीर्घादिप्रतिपत्ति.। तदा एको दीर्घ इति न स्यात्। अथ पू[16]र्व्वो- 23b
प्यनुवर्त्ततेऽपरस्यापि च प्रतिपत्तिः। तथा सति वर्द्धमानता ध्वने स्यात्। पूर्व्वस्यान्वयादपरस्य च सम्भवात्। अन्त्यावस्थायाञ्चासौ दीर्घ इति प्रत्येयः। तदा चाक्रम ग्रहणमिति क्रमवदिति न स्यात्। पूर्व्वापेक्षया क्रम इति चेन्न। पूर्व्वापरबुद्ध्योरन्यत्वात्। अथ प्रथममुत्पन्ना बुद्धिरेकैवास्ते।

तदप्ययुक्तम्॥

धियः स्वयञ्च न स्थान तदूर्ध्वविषयास्थितेः॥ (४८६)

न ह्यनुपचितध्वनिरुपचितध्वनिकालमास्ते। तथा चेदपरः पुनरुपचय इति सैवानवस्था। अथ विषयानवस्थानेपि स्वयमेवावतिष्ठते तदापि।

स्थान स्वयन्न नश्येत्सा पश्चादप्यविशेषतः॥

(C 129b) यदि विषयग्रहणमन्तरेणापि तद्ग्रहणरूपा बुद्धिरवतिष्ठेत न कदाचिन्नश्येत। इत्यतिदीर्घता भवेत्॥ अथ विषयग्रहणाभावो विषयाभावे तदा न दीर्घग्राहिका भवेत्। भागमात्रस्य ग्रहणात्। अथैक एव वर्णात्माऽक्रम उत्पन्नः कालान्त[2]रस्थायी। तदयुक्तं॥

दोषोयं सकृदुत्पन्नाक्रमवर्णस्थितावपि। (४८७)

यदि सकृदुत्पन्नः कियन्तमपि कालमास्ते सर्व्वदा तिष्ठेत् । पश्चादप्यविशेषादिति । किञ्च ॥

सकृद्यत्नोद्भवाद्व्यर्थः स्याद्यत्नश्चोत्तरोत्तरः ।

येनैव प्रयत्नेन प्रथमं रूपं निर्वर्त्तितं तेनैव परोपि भागस्तदव्यतिरेकादिति तस्मादपरस्य व्यर्थतैव ॥

व्यक्तावप्येष वर्णानां दोषः समनुषज्यते । (४८८)

सकृद्य[3]त्नेन सर्व्वस्य व्यक्तत्वाद्यत्नान्तरमनर्थकं ॥ तस्मान्नैकबुद्ध्या दीर्घावयवानां ग्रहणम् । अनेकबुद्धिग्रहणमुपगन्तव्यम् ।

तदा च ।

अनेकया तद्ग्रहणे या(ऽ)न्त्या धीः सानुभूयते ।
न दीर्घग्राहिका सा च तन्न स्याद्दीर्घधीस्मृतिः । (४८९)

यदा नैकया बुद्ध्या दीर्घावयवानां ग्रहणं तदान्त्या बुद्धिर्बुद्ध्यन्तरेणानुभूयते । सा च दीर्घग्राहिका ततः । कथं दीर्घधीस्मरणं । नाननुभूतस्मरणम् । अन्त्या च[4] बुद्धिर्बुद्ध्यन्तरेणानुभूयते । पूर्व्वबुद्धीनान्तद्व्यवहितत्त्वान्नानुभवः । अन्त्या च दीर्घग्रहणव्यापृता. ततो दीर्घादिधीस्मरणमपि न भवेत् अथापि स्यात् (C. 130a) पृथक् पृथक् बुद्धीनां बुद्ध्यन्तरैर्ग्रहणं ततः सर्व्वाः स्मर्यन्त इति दीर्घधीस्मृतिः ।

तदप्ययुक्तं । यतः ।

पृथक् पृथक् च बुद्धीनां सम्वित्तौ तु ध्वनिः श्रुताः ।
अविच्छिन्नाभता न स्याद् घटनञ्च निराकृतम् । (४९०)

बुद्धिग्राहिकाभिर्बुद्धि[5]भिः शब्दभागबुद्धीना व्यवधानादविच्छेदप्रतीतिर्न्न स्यात् । न हि विच्छिन्नमविच्छिन्नं प्रत्येतुं शक्यं । सघटनेन प्रतीतिरिति चेत् । अत्राह ।

घटनञ्च निराकृतम् ।

अन्यत्रापि समानन्तद्वर्ण्णयोर्वा सकृच्छ्रुति रित्यादिना ।

अपि च ।

विच्छिन्नं शृण्वतोप्यस्य यद्यविच्छिन्नविभ्रमः ।
ह्रस्वद्वयोच्चारणेपि स्यादविच्छिन्नविभ्रमः । (४९१)

ह्रस्वद्वयस्य निरन्तरमुच्चारणन्नास्तीति । विच्छेदादेकबुद्धेरभावः[6] । यदि तु मात्राणामपि स एव विच्छेदस्तथाप्यविच्छेदाभिमान. । स इह ह्रस्वद्वयोच्चारणेपि समानोन्यस्य इति कस्मान्न दृष्टः ।

न चात्र विच्छेदप्रतीतित्वेपि विच्छेद एव। न तु विभ्रम· इत्ययमेव पक्षः क्षमः। किञ्च॥

विच्छिन्ने दर्शने चाक्षादविच्छिन्नाधिरोपणं।
न स्यात्सर्व्वाक्षबुद्धीनां वितथत्त्वप्रसङ्गतः। (४९२)

यद्ययमविच्छेदप्रत्यययोर्विभ्रम एव तदाक्षजो वा भवेन्मानसो वा। यदीन्द्रियजः सर्व्वाक्षबुद्धीनां वितथत्त्वम्भवेत्। तथा हि।

सर्व्वान्तया हि वर्णात्मा निमेषतुलितस्थितिः।
स च क्रमादनेकाश्च (c 130b) सम्बन्धेन न तिष्ठति। (४९३)
एकाणवत्ययकालश्च कालोल्पीयान् क्षणो मतः।
बुद्धिश्च क्षणिका तस्मात्क्रमाद्वर्णान्प्रवर्तते। (४९४)
इति वर्णेषु रूपादावविच्छिन्नावभासिनी।
विच्छिन्नाप्यन्यया बुद्धिः सर्व्वा स्याद्वितथार्थिका। (४९५)

क्रमेण हि सकलवर्ण्णप्रति[8]पत्तिः (।) क्षणिका बुद्धिरपरापरप्रबन्धवद्रूपेण वर्ण्णग्रहणात्। रूपादयोपि जन्मभाजः क्रमादेव। ततः तत्रापि यदीन्द्रियमलातचक्रवद् भ्रान्तं प्रत्ययं जनयेत्। न क्वचिद्भ्रान्तता भवेत्। अथ मानसो विभ्रमः। तदान्यो दोषः। तथा हि।

घटन यच्च भावानामन्यत्रेन्द्रियविभ्रमात्।
भेदालक्षणविभ्रान्तं स्मरणान्तद्विकल्पकं। (४९६)
तस्य स्पष्टावभासित्व जल्पसंसर्गि[9]णः कुतः।

मानसो हि विप्लवः स्पष्टतामतिक्रम्य वर्तमान एव स्पष्टो भवतीत्यसत्यमेवैतत्।

स्पष्टाकारञ्च वर्णाद्याकारं विज्ञानमिष्यते (।) तत्कथमसौ मानसी भ्रान्तिरिति युक्तं। जन्य संसर्गिणो हि न स्पष्टतासम्भवो न विकल्पानुबद्धस्य स्पष्टार्थावभासितेत्युक्त। तथा।

नाक्षग्रहेस्ति शब्दानां योजनेति विवेचितम्। (४९७)

अथ (—)

विच्छिन्नं पश्यतोप्यक्षैर्घटये[10]द्यदि कल्पना॥
अर्थस्य तत्सम्वित्तेश्च सतत भासमानयोः। (४९८)
बाधकेऽसति सन्न्याये विच्छिन्न इति तत्कुतः।

नाविच्छिन्नं प्रतिभासमानं विच्छिन्नमिति कल्पनीयं। न खलु प्रत्यक्षमन्यथा कल्पनामर्हति (C. 131a)। कल्पनाया एवासत्त्वकल्पनं युक्तं प्रत्यक्षबाधितत्त्वात्। तस्मादसदेतत्। अथ स्वसम्वेदनं नास्तीति बुद्ध्यन्तरसम्वेदनाभ्युपगमे न च युगपद् बुद्धिसम्भवः। तेन बुद्ध्यन्तरेण व्यव[11]धानाद्विच्छिन्नं दर्शनमिति। अत्राह।

बुद्धीनां शक्तिनियमादिति चेत्स कुतो मतः (४९९)
युगपद्बुद्ध्यदृष्टञ्चेत् तदेवेद विचार्यते।

शक्तिनियमे हि बुद्धीना युगपदसम्भवः। स एव तु शक्तिनियम कुतोवसातव्य। अथ युगपद्बुद्ध्यदर्शनाच्छक्तिनियमः। विच्छिन्नं तर्हि दर्शन नास्त्यदर्शनस्य तत्रापि सम्भवात्। अथ दर्शनं तत्र न प्रमाणं। युगपददर्शन अपि तर्हि कथं प्रमाणम्।

विच्छिन्नबुद्ध्युत्पाद[12] स्य योऽभावस्याप्रसाधक।
स एवानुपलम्भ कि यौगपद्यस्य साधक।

तत्र किमविच्छिन्नदर्शनाद्युगपद्रूपोत्पाद. प्रत्ययानामथायौगपद्यदर्शनाद्विच्छिन्न दर्शनं कल्प्यतामिति विचार्यमेतत्।

ननु युगपद् बुद्ध्यदर्शनमस्त्येव। नहि नित्येप्यदर्शने [? ष्यर्थे] भाविभूतरूपदर्शनमुपलभ्यते युगपत् क्रमेणैव दर्शनात्। आगमोप्यस्ति भवतः। तथाह्युक्त (—) "अस्थानमनवकाशो यदपूर्वाचर[13]मे द्वे चित्ते समुत्पद्येयातां।"

तदसत्।

तासां समानजातीये सामर्थ्यनियमो भवेत्। (५००)

तथाहि।

तथाहि सम्यक् लक्ष्यन्ते विकल्पाः क्रमभाविनः।

बुद्धीना हि शक्तिनियमः समानजातीयविज्ञानोत्पादनापेक्षया न सामर्थ्येन।

चक्षुरादिविज्ञानानि समानजातीयं चक्षुरादिविज्ञानमेव (C. 131b) नोत्पादयन्ति न पुनः स[14]कलमेव। तत्र यदि ग्राह्यग्राहकरूप द्वयमुत्पादयेदसमानजातीये को विरोध.।

## १६. प्रत्यभिज्ञानिरासः

ननु विकल्पोपि स्पष्टावभासी प्रत्यभिज्ञानाख्यप्रत्यक्षप्रत्ययः परैरिष्यते। इष्यतां न तु तथा। तथाहि।

एतेन यः समस्तेर्थे प्रत्यभिज्ञानकल्पनां। (५०१)
स्पष्टावभासां प्रत्यक्षां कल्पयेत् सोपि वारितः॥

इन्द्रियविज्ञानस्य पूर्व्वापररूपग्रहणसमर्थस्याभा[15]वात्कल्पने च स्पष्टाव- 242a
भासवती प्रत्यक्षमिति यो मन्यते प्रत्यक्षतया सोपि वारित.। तथाहि। न कल्पना स्पष्टावभासा तस्याः कुतः प्रत्यक्षता। न स्पष्टावभासित्त्वेपि प्रमाणता व्यभिचारात्। तथा हि॥

केशगोलकदीपादावपि स्पष्टावभासनात्। (५०२)
प्रतीतभेदे प्रत्यक्षा धीः कथन्तादृशी भवेत्॥

अध्यक्षस्य तत्र बाधितत्त्वादनध्यक्षता। केन बाध्यतेऽन्तरा विच्छेदेन। इहापि पूर्व्वापररूपाप्रतिभास[1]नलक्षणो विच्छे(दो)स्त्येव॥

तस्मान्न प्रत्यभिज्ञानाद्वर्णाद्येकत्त्वनिश्चयः। (५०३)

प्रमाणत्त्वाभावादतो य आह।

मात्राभेदेपि वर्णानामेकत्त्व प्रत्यभिज्ञया।
प्रतीयते तत. केन दीर्घादेरग्रहो भवेत्।

तस्यापि वचनमात्रकमेतन्न प्रमाणं प्रत्यभिज्ञेति प्रतिपादनात्। अपि च। न प्रत्यक्षमक्षजं प्रत्य(भि)ज्ञा। तथाहि।

पूर्व्वानुभूतस्मरणात्तद्धर्मारोपणाद्विना।
स एवायमिति ज्ञान नास्ति तच्चाक्षजे कुतः॥ (५०४)

न पूर्व्वानु[2]भवमन्तरेण (C 132a) स्मरणं न स्मरणमन्तरेण स एवायमित्येवं रूप प्रत्यभिज्ञानं। पूर्व्वानुभूतैकत्त्वग्रहणरूपा हि प्र त्य भि ज्ञे दानीमनुभूयमानस्य। न च स्मरणमन्तरेण पूर्व्वरूपताग्रहः। न च स्मरणविषयोर्थः प्रत्यक्षगोचरोऽन्यथा सकलमेव पूर्व्वानुभूतं प्रत्यक्षमिति किमिदमक्षव्यापारेण। अथ कदाचित्पूर्व्वदृष्ट मृतनष्टमपि स्यादत इदानीमक्षव्यापारोपेक्ष्यते। यद्येवमक्षव्यापा[3]रस्तत्रैवास्तु किन्तद्देशगमनेन। योग्यदेशतां विना नाक्षं समर्थमिति चेत्। यद्येवं देशान्तरदृष्टे इह प्रत्यभिज्ञानाभावश्च। नहि देशान्तरसम्बन्धि रूपं योग्यदेशावस्थापि। उभयदेशसम्बन्ध्येकमेव तेन स एव योग्यदेशस्ततोयमदोषः। एवं तर्हि स्मरणमन्तरेणैव कस्मान्न तया[? तथा] प्रतीयते। तत्सम्बन्धस्यापगमान्न प्रतीतिः। स्मरणेपि तर्हि कथं स एवायमिति स्यात्।[4] व्यपगतस्यापि स्मरणमित्यदोषः। न प्रमाणम्प्रत्यभिज्ञा। सम्बन्धोपगतो न सम्बन्धीति चेत्। तस्य तर्हि पूर्व्वदेशकालसम्बन्धाभावे. इदानीन्तनमेव रूपमिति भेद एव पूर्व्वापरयोः। अतः स एवायमिति

प्रतीतिर्न्न भेदः। ननु सैव केन प्रतीतिरिति विचार्यमिदमेव। नहि प्रतीतिमात्र प्रमाणमन्यथा किं प्रत्यक्षत्त्वसाधननिर्ब्बन्धेन। पूर्व्वकालादिसम्बन्धे चाप्रतीयमाने यदि[5] नित्यत्त्वमुच्यते सर्व्वपदार्थानामेव नित्यता भवेत् तदोत्पत्तिमतामपि।

इदानीन्तनरूपेण प्रतीतावपि (C 132b) नित्यता।
यदि तत्क्षणसम्भूते कस्मादिव न नित्यता।

यद्यपि तस्य पूर्व्वता नोत्पन्ना तथाप्यस्त्येव। अनुत्पन्ना कथमस्ति विनष्टा कथमस्तीति समानं चोद्यम्। न च प्रागभावप्रध्वंसाभावयोर्व्विशेषः। प्रध्वस्तं स्मर्यते। प्रागभूतमपि सम्भवानुमाने प्रतीय[6]ते। भावितया प्रतीयते न पूर्व्वतया।

ननु भावित(य)ा प्रतीयत इति भाविप्रत्यक्षं भविष्यतीत्यर्थः। तेन तदा नास्ति पश्चाद् भविष्यतीति। इहापि भूततया प्रतीयते प्रत्यक्षमभूदिति नेदानीमस्तीति (।) भवतु कथमिदानीमप्यस्ति। इदानीमपि प्रतीतेरिदानीमस्तीति। मध्येतर्ह्यस्तीति कथं। इदानीमेव दर्शनात्। नहि पूर्व्वमसदिदानीमुपलभ्यते। न तर्हि प्रत्यक्षमेतत्। न चानुमान[7]मपि तस्य पूर्व्वास्तितया सम्बन्धाग्रहणात्। निरन्तरदर्शने सम्बन्धे ग्रहणमिति चेत्। न. निरन्तरदर्शने प्रमाणाभावात्। नहि (—) निरन्तरं मम दर्शनमिति स्मरणादपरं प्रमाणं। इयमेव प्रत्यभिज्ञेति चेत्। न. प्रमाणत्त्वस्य चिन्त्यत्त्वात्। अविसम्वादात्प्रमाणमिति चेत्। न. नित्यतायामविसम्वादाभावात्। तस्मादयमविसम्वादोर्थक्रियामात्रे तादृशा च पदार्थेन तादृशी क्रियतेर्थक्रि[8]या। न तेनैव। प्रमाणाभावात्। अन्यथा सर्व्वदार्थक्रियासम्बद्ध इति तदैवार्थक्रियानुभूयेत। अभावादर्थक्रियाया इति चेत्। कथमिदानीमर्थक्रियासम्बद्धेतरयोर्न (C. 133a) भेदः। पश्चात्तत्रैवार्थक्रियानुभूयत इति न सङ्गतम्। अनवस्थाप्रसङ्गात्। यतः। तत्रापि परोऽर्थक्रियाऽविसम्वादोऽभ्युपगन्तव्यस्तत्राप्यपर इति न व्यवतिष्ठेत। तस्मादप्रमाणमेव प्रत्यभिज्ञेति स्थि[9]तमेतत्।

तस्माद्व्यवहितत्त्वान्मात्राग्रहणस्य नैरन्तर्याभावान्न दीर्घादिग्रहणं।

## १७. स्वमते बुद्ध्युत्पादः

अथ युगपद्विज्ञानसम्भव इष्यते तदप्ययुक्तं। यतः।

न चार्थज्ञानसम्वित्त्योर्युगपत्सम्भवो मतः।
लक्ष्यते प्रतिभासो वा नार्थार्थज्ञानयोः पृथक्॥ (५०५)

युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति (न्या० सू० १।१।१६) वचनात्। न चार्थावभासि ज्ञानमर्थश्च केवलः प्रतिभासमान उपलभ्यते।

स्वसम्विदितरूपत[10]या बाह्य एव नीलादिप्रतिभास उपलभ्यते। नापरमपि तत्र। अर्थैकाकारतया तयोरनुपलक्षणं। यथा सुखतासम्वित्त्योः (।)

तदप्यसत् (।) यतः।

न ह्यर्थाभासि विज्ञानमर्थो बाह्यश्च केवलः।
एकाकारमतिग्राह्ये भेदाभावप्रसङ्गतः॥ (५०६)

यदि सुखादीनान्तन्मतेश्चैकाकारता तदा तत्राप्यभेद एव। न भेदावभासमन्तरेण भेद.। अर्थसम्वेदनमेव केवलमिति युक्तं तथा[11]नीलादिकमिति च। तस्मात्सुखादिनीलादिव्यतिरिक्तमपरमिह जगति सम्वेदनं नास्तीति (c 133b) सुखादिवत्स्वसम्वेदनं नीलादिकमपीति युक्त एव निर्ण्णयः।

अथ यदि नाम सम्वेदनमपरमिह न लक्ष्यते परिस्फुटेन भेदेन। तथापि तदस्त्येव। यथाहि रूपादौ नियत आलोकः।

तदप्यसत्। तथाहि ।

सूपलक्ष्येण भेदेन यौ सम्वित्तौ न लक्षितौ।
अथार्थप्रत्ययौ पश्चात् स्मर्येते तौ पृथक् कथम्॥ (५०७)

आलोकोपि यदि किमपि भेदग्राहकमस्य नास्ति प्रमाण नास्त्येव पृथक्। भेदोपलक्षणे हि सम्वेदनेन चिन्त्येत भेदः। न च तथा तस्मान्न पृथक् सम्वेदनं नीलात्। आलोकस्तु कदाचित्केवल उपलभ्यते। रूपं वा कैश्चित्। ततश्च यथा केवलं रूपं केवल आलोकः सालोकं रूपं तथा केवलं विज्ञानं केवलो[13]र्थः सम वेदनोर्थ इति स्यात्। प्रतिभासद्वयं भवेत्॥

क्रमेणानुभवोत्पादेप्यर्थार्थमनसोरयं।
प्रतिभासस्य नानात्त्वचोद्यदोषो दुरुद्धरः॥ (५०८)

यथा युगपत्सम्वेदनाभ्युपगमे अर्थार्थप्रतिभासद्वयप्रसङ्ग इति दुरुद्धरो दोषः। तथा क्रमेणापि। तथाहि (—)

अर्थसम्वेदनं तावत्ततोर्थाभासवेदनं (।)
नहि सम्वेदनं शुद्धं भवेदर्थस्य वेदन॥ (५०९)

अर्थवे[14]दनं हि वेदनान्तरेण वेद्यमानमर्थस्य वेदनरूपतयैव वेदितव्यम्। तथा द्विरर्थावभासनप्रसङ्गः। अन्यथा तदर्थस्य वेदनमिति कथं वेदनान्तर वेदयेत्। तस्मादुत्तरकालमप्यर्थावभासेन भाव्यं। न चैवं। तथाहि।

(c. 134a)(एव हि) नीलाद्याकार एक एक च वेदन।
लक्ष्यते न तु नीलाभे वेदने वेदनं परं॥ (५१०)

अत्र विचार्यते । किं युगपज्ज्ञानपक्ष एव दोषः किम्वा क्रमज्ञानपक्षे[15] । यदि युगपत् । तदसत् । युगपन्न द्वयं सम्वेद्यते नीलाकारः सम्वेदनञ्च । तथा च प्रतिपादितं । अथ क्रमेण (।) तदापि न सम्वेदनमात्र पश्चाल्लक्ष्यते । स्मरणेन सनीलस्यैवोपलक्षणात् । तदयमदोषः । न दोषः । अयमस्यार्थ. । नीलाद्याकार एकः सम्वेदनेन । एकञ्च सम्वेदनं नीलाकारेण । न तु नीलाभे सम्वेदने । सम्वेदनमपरमर्थव्यतिरिक्तं लक्षयामः । अथवा नीलाद्याका[16]र एक एकञ्च सम्वेदनं सुखादिरूपं सम्वेदयामो नापरं सुखादिसम्वेदने ग्राहकं । तत्राप्यपरमित्यनन्ताकारसम्वेदनानुभवः ।

इदानी प्रकृतमेवानुबध्नाति ।

ज्ञानान्तरेणानुभवो भवेत्तत्रापि च स्मृतिः ।
दृष्टा तद्वेदनं केन तस्याप्यन्येन चेदिमां ॥ (५११)
मालां ज्ञानविदां कोयं जनयत्यनुबन्धिनीम् ।

यदि ज्ञानस्य ज्ञानान्तरेणानुभव· । स कथं ज्ञातव्य. । तत्रापि[17]स्मृतिर्दृष्टेति । 24b
सम्वेदनन्तर्हि ज्ञानान्तरेणेति तत्रापि स्मृतिरेव प्रमाणम् । तदा चेमां मालां ज्ञानतद्वेदनानां को हेतुरनुबन्धवतीं जनयेत् ।

पूर्व्वा धीः सैव चेन्न स्यात्सचारो विषयान्तरे । (५१२)

(c 134b)पूर्व्वपूर्व्वा बुद्धिरेवोत्तरोत्तरया ग्राह्या न नीलादिका विषय इति तद्ग्रहणन्न स्यादेव । यतः ।

तां ग्राह्यलक्षणप्राप्तामासन्नां जनिकां धियं ।
अगृहीत्वोत्तरं ज्ञानं गृह्णीयादपरं कथम् । (५१३)

यदि बुद्धिः स्वसम्वेदनरूपासत्यर्थं गृहणीयात्ततो यथा सन्निहितस्यार्थस्य ग्रहणमिति विषयसंचारो भवेत् ॥ यदा तु बुद्धिर्बुद्ध्यन्तरेण गृह्यते तदा तां ग्राह्यलक्षणप्राप्तां सतीमगृहीत्त्वोत्तरं ज्ञानं पूर्व्विकां बुद्धिं कथन्नीलादिकं गृहणीयात् । नहि प्रत्यासन्नमात्मसम्बद्धत्वेन ग्राह्यं मुक्त्वा परग्रहणे सामर्थ्ययोगः ॥ अथ बाह्योर्थः सन्निहितः सविबन्धक इति विषयान्तरसञ्चा[2]रः ।

तदसत् । यतः ।

आत्मनि ज्ञानजानने स्वभावे नियताञ्च तां ।
को नामान्यो विबध्नीयाद्बहिरङ्गेऽन्तरङ्गिकाम् । (५१४)

बाह्यः सन्निहितोप्यर्थः तां विबन्धुं हि न प्रभुः।
धियं नानुभवे कश्चिदन्यथार्थस्य सन्निधौ। (५१५)

तथा च स्मरणन्न स्यात्। अथ विबन्धकाभावे भवेत्।

तदसत्यं। यतः।

न च सन्निहितार्थोस्ति दशा काचिदतो धियः।
उत्सन्नमूला स्मृतिरप्युत्सन्नेत्युज्ज्वलं मतम्। (५१६)

अर्थ इत्येव स्मर्येत नानुभूत इति। अथार्थापत्यानुभूतोऽर्थः स्वानुभवं कल्पयेत्।

तदप्यसत्। अर्था[3]नुभव एव यदा सन्ततो जातस्तदा नार्थापत्तिरपि। अर्थापत्तिर्यदा स्मर्यते तदापरार्थापत्तिरिति सैवानवस्था। तस्मादनुभूतोऽनुभवः स्मर्यते नान्यथा। ततोऽर्थकृतव्याघातान्नानुभवो न च स्मरणं। न च सत्तामात्रकादर्थानुभवः। इन्द्रियसम्बन्धात् सोपि कुतो ज्ञातव्यः। अपरेन्द्रियसम्बन्धावित्यनवस्था।

अतीतादिविकल्प (I) नां येषां नार्थस्य सन्निधिः।
सञ्चारकारणाभावादुत्सीदेदर्थचिन्तनं (c. 135a) ॥ (५१७)

अतीतादिविकल्पानां नेन्द्रियसम्बन्धोऽतः कथम[4]नुभूतत्त्वनिश्चयः। ततोर्थचिन्ता न स्यात्। चिन्ताचिन्तानवस्था भवेत्। अथ तत्राप्यर्थ एव देशकालान्यथात्मको भवेत्। तदा तर्हि तेन सर्व्वदा व्याघातकृता भवितव्यं। तथा च संचारो न भवेदेव। तेनैवापकृतत्त्वात्। इन्द्रियविज्ञाने हि सन्निहित एवार्थो व्याघातकारी। ततः कदाचित् बुद्धितद्वेदनानां प्रबन्धविच्छेदो भवेत्कदाचिदन्यथा। चिन्तासन्ताने तु व्यवहि[5]तोप्यर्थो विषयत्वात्सर्व्वदा व्याघातकारीति तत्रार्थ एव वेद्येत। न सम्वेदनं ममेति सम्वेदनस्मरणन्न स्यात्। अथ न व्याघातकारी तथा सति चिन्ताचिन्तादिसन्तानवेदनमेवार्थचित्तमुत्सीदेदेव। अथापि स्यात्। शक्तिरस्ति काचिद्यात्मविज्ञानं जनयति (।)तस्याः क्षये क्रमेणोपजाते विषयान्तरे भवेत्सञ्चार इति।

तदप्ययुक्तं। यतः।

आत्मविज्ञान[6]जनने शक्तिसंक्षयतः शनैः।
विषयान्तरसचारो यदि सैवार्थधीः कुतः। (५१८)

यदि शक्तिविकलापूर्व्वबुद्धिर्बुद्धिग्रहणं प्रति शक्तिविरहे साप्यर्थधीर्विषयान्तरसञ्चारवतीत्वेनाभिमता न भवेत्।

*शक्त हि जनकं नाशक्तं

तस्माच्छक्तिक्षये पूर्व्वं धियो नार्थान्तरसञ्चार.। यत·।

नहि धी: प्राग्धिया विना।

किं कारणं।

अन्यार्थासक्तिविगुणे ज्ञाने' ज्ञानोदयागतेः। (५१९)

यदि तु पूर्व्वबुद्धेः कारणत्त्वं न स्यादर्थान्तराशक्तिवैगुण्येप्युदयो भवेत् बुद्धचन्तरस्य। नह्यकारणस्य वैगुण्यमवैगुण्यम्वा वाच्यायातमितरद्वा विदधीत। तस्मात्पूर्व्वबुद्धिः कारणमेव। तदशक्तत्त्वादर्थधीरपि न स्यादेवेति सुतरा विषयान्तरसञ्चाराभावः। यस्य तर्हि. आ ल य वि ज्ञा न सकलप्रवृत्तिविज्ञानजनकम्[8] (।) तस्य पूर्व्वविज्ञानकारणत्त्वं नास्ति (।) तत एव सकृदालयविज्ञानात्प्रवृत्तिविज्ञानोदयात्। ततोस्माकमपि न तत्कारणं (।) पूर्व्वप्रवृत्तिविज्ञानकारणत्त्वे तु तदन्वयव्यतिरेकानुविधायिकार्यमिति न स्यादालयविज्ञानस्य कारणत्त्वं। अत्रोच्यते।

सकृद्विजातीयजातावप्येकेन पटीयसा।

चित्तेनाहितवैगुण्यादालयान्नान्यसम्भवः। (५२०)

यस्या[9]प्यालयविज्ञानं कारणन्तस्यापि। यतः। कदाचित् सकृद्विजातीयविज्ञानोदयेपि (C. 136a) पुनरालयान्नान्यसम्भव एकेन पटीयसा पूर्व्वकप्रवृत्तिज्ञानेनार्थान्तराशक्तिविगुणाहितवैगुण्यादतः(।)अत(:)स एव तत्रापि स म न्त र प्र त्य य। तत एव तर्हि विगुणाद्विज्ञानोदयानुदयौ किमालयविज्ञानेन। आस्तामियमालय[10] विज्ञानचिन्ता। वासनाधारतया वा परिकल्पितन्तदिति न दोषः। यदि तु पूर्व्वविज्ञानस्य कारणता नेष्यते तदा।

नापेक्षितान्यथा साम्यं मनोवृत्तेर्मनोन्तरं।

पूर्व्विकाया हि मनोवृत्तेर्मनोन्तरं साम्यमपेक्षेत यदि सा कारणमकारणस्यापेक्षणीयतायोगात्। तस्मादपेक्ष्यत्त्वात्कारणमेवासाविति युक्ति[11]मानेव निर्णयः।

अपि च।

मनोज्ञानक्रमोत्पत्तिरप्यपेक्षाप्रसाधन ॥ (५२१)

मनोविज्ञानस्य हि समनन्तरप्रत्ययमात्रमेव हेतुः। तस्या हेतुतायामहेतुकत्वात् युगपदुदयो भवेत्। तस्मात्पूर्व्वविज्ञानकारणमेवोत्तरं विज्ञानमिति पूर्व्वविज्ञानशक्त्यभावे न किञ्चिद् भवेत्।

---

* स्ङर्-ग्यि ब्लो नि नुस्-सद्-न। दोन्-ल ऽफो-व मि-ऽग्युर्-तें। (=पूर्वं धीशक्तिनाशे हि नार्थे सक्रमण भवेत्।)—इति भोटभाषान्तरे पाठ।

एकत्वान्मनसोन्यस्मिन्सक्तस्यान्या(ऽ)गतेर्यदि ।
ज्ञानान्तरस्यानुदयो न कदाचित्सहोदयात् ॥ (५२२)

यद्येकत्त्व मनसस्तस्य चैकत्र गतावन्यत्रागतिरिति पूर्व्वक विज्ञानमकारणमेव ।

तदप्ययुक्तं। यतस्तदपि मन.पूर्व्वकं विज्ञानमेव न तदपरं प्रमाणप्रसिद्धं । (c. 136b) युगपद्विज्ञानानुदयेन हि तत्साध्यते स च पूर्व्वविज्ञानान्याशक्ति-विगुणत्त्वादेव[13] सहोदयश्च कदाचिदुपलब्धः ।

समवृत्तौ न तुल्यत्त्वात्सर्व्वदान्यागतिर्भवेत् ।

यस्य तु मनस एकत्त्वकृतो विज्ञानान्तरानुदयस्तस्य समवृत्तौ चान्यदा च सर्व्वदानुदयः स्यात् ।

अस्माकन्तु समवृत्तावुदयोऽन्यदा चानुदय इति नहि किञ्चिद्व्याहत ।

नन्वन्तरेण मनः कथं क्रमः । विज्ञानवैगुण्यादिति प्रतिपादि[14]त ।

जन्म चात्ममनोयोगमात्रजानां सकृद् भवेत् ॥ (५२३)

न हि तत्र विषयान्तरगतिरस्ति । यतः । क्रमो भवेत् । सुखादिबुद्धीनामात्मन सयोगमात्रत्वात् इति प्रतिपादित ।

अर्थेकत्त्वान्मनस एकैव बुद्धिक्रिया भवेत् ।

तदसत् । यतः ।

एकैव चेत्क्रियैकः स्यात्किन्दीपोनेकदर्शनः ।

यथैव प्रदीप एको[15]प्यनेकदर्शनजनकः । तथा मनोपि । तथानेकद्रष्टृवशाद 25a
ग्राप्यनेकग्राह्यवशादिति समानम् । न च मनसः कारणत्त्वं विज्ञानस्यैव वासना-नियमात् । तथात्त्वं मनसस्तु नित्यत्त्वात् ।

क्रमेणापि न शक्त स्यात्पश्चादप्यविशेषतः ॥[१] (५२४)

नहि नित्यस्य विशेषाधानं ॥ कुतश्चिद्विशेषस्य तत्त्वान्यथाभ्यासयोगात् । यतस् (।)

तदात्मा न विशेष स्यादन्यश्चेत्तस्य किम्भवेत् ।
तत्सम्बन्धेपि तस्यासौ नैव स्यादेकरूपता ॥

[ तदुक्तौ देह पुरुषावध संस्कारतो यदि ।
नियमः सकृतः पश्चाद्बुद्धेश्चेदस्तु सम्मतं ॥५२५॥ ][१]

---

[१] ऽदि-लुस् स्क्येस्-बु ब्शद्-प यिन् । गल्-ते ऽदु-ब्येद्-लस् ङे म्- न । दे-फ्यिस् गङ-लस् ब्लो-ञिद्-लस् । शे-न यिन् मोद् ऽदोद्-प ञिद् ॥

(c. 137a) अनेन देहपुरुषावुक्तौ। योपि मन्यते देहपुरुषयोरेकत्वादेकैव क्रिया। तदप्यनेनैव गतं। कि दीपोनेकदर्शन

क्रमेणापि न शक्तिरविशेषादिति। अथ विशेष.। तदा विज्ञानमेव शक्त्यतिशयसमन्वितं तत्क्रमकारणमिति वृथा देहपुरुषयोः कारणत्वोपगम.। "सस्कारतो यदि (।) नियमः स कुतः पश्चात् बुद्धेश्चेदस्तु सम्मतं।" सस्कारोपि स्थित एव।[2]ततो न नियम । अथ पश्चादुत्पत्तिमान् स कुत.। ज्ञानजो ज्ञानहेतुश्च स स्का र इति बुद्धेरेव सस्कारः। यद्येवं सम्मतमेवैतदस्माकं बुद्धिजनितः संस्कारो वासनापरनामा ततो नियमः पूर्व्वबुद्धेरेवान्यत्र प्रमाणाभावात्। नहि बुद्धिमन्तरेणान्या वासना नाम। अथापि स्यात् (—) ज्ञानान्तरजननमेव केवलं न ग्राह्यता तेन जनिकापि बुद्धिपूर्व्विका बुद्धिरग्रा[3]ह्यतो विषयान्तरसञ्चारः ।

तदसत्यं। यतो (—)

न ग्राह्यताया जननाज्जननं ग्राह्यलक्षणं ।

ग्राह्ये हि पदार्थे ज्ञानजननमेव ग्राह्यलक्षणम्।

यतो

अग्राह्यं नहि तेजोस्ति न च सौ (रम्या)*ह्यनङ्गके† ॥ (५२६)

नालोकः कथञ्चिद्विज्ञानं जनयत्यग्राह्यतया। ग्राह्य हि सकलमेव दृष्टं (c. 137b)। अथालोकः सावयवत्वात्परभागादिना जनकोपि न ग्राह्यः। नानङ्गस्य विज्ञानस्याङ्गाभावात्। आलोको हि साङ्ग इति तथा[4] युक्तः।

ग्राह्यताशक्तिहानिः स्यान्नान्यस्य जननात्मनः ।

तदयुक्तं । यतः

ग्राह्यताया न खल्वन्यज्जनन ग्राह्यलक्षणे । (५२७)

साक्षान्नह्यन्यथा बुद्धे रूपादिरुपकारकः ॥

पारम्पर्येण हि ग्राह्यमप्यग्राह्यतया भवेदुपकारक बुद्धे। साक्षात्तु नान्यथेति जनिका ग्राह्यैव बुद्धिः ।

ग्राह्यतालक्षणादन्यस्तद्भावनियमोस्य कः। (५२८)

बुद्धेरपि तदस्तीति सापि तत्त्वे व्यवस्थितेर् (।)

(—) अनन्तरश्लोकः।

---

*अय दुर्दृश्य पाठो हे पुस्तकादुपलभ्यते ।

†ह्यनशके—इति हे पुस्तके ।

तस्मान्नाग्राह्या बुद्धिः । यस्मात् ।

ग्राह्युपादानसम्वित्ती चेतसो ग्राह्यलक्षणम् । (५२९)

चेतसो हि ग्राहिणि विज्ञाने तदुपादानभावः । सम्वेदनता च ग्राह्यता नापरमत्र सूक्ष्मतादिकमिति नाग्राह्यता । यद्युपादानभाव एव ग्राह्यता स चोपादानभाव स्वबुद्धेरेव । अन्यथा परबुद्धेरपि सम्वेदनप्रसङ्गः । परचित्ताग्रहणन्त्वनुपादानभावात् । रूपस्य चाग्रहणं दूरसूक्ष्मादिभावादिन्द्रियस्य ग्राहिविज्ञाना[6]नुपादानादिति विषयविभागः । (c 138a) यदि तु बुद्धेरप्यग्राह्यता सापि चक्षुरादिवदेव । ग्राह्या न भवेत् । अथार्थापत्त्या प्रतीयते बुद्धिस्तेन स्मरणम् ।

तदयुक्तं । सर्व्वदात्त्वापत्तेरसम्भवात् ॥

यदा स्तम्भघटादीना सत्त्वर गणयेदय ।

प्रपञ्चमतिबाहुल्य नार्थापत्युदयस्तत ॥

नहि त्वरित गणयतोस्यार्थापत्तेरुदयः । अथार्थापत्तिरपि तत्र व्यापारवती न. व्यापाराप्रतीते. ।

न[7]चार्थापत्तिसद्भावो वेद्यते व्यवहारिभि ।

अर्थादर्थविदोवेय जायेतोभयतोथवा ॥

न तावदर्थादर्थाद्धि सर्व्वधीप्रतिपद्भवेत् ।

अर्थवित्तेरपि ममेत्येव नैवार्थधीर्गति ( · ) ॥

उभयस्मादपि गतिर्न्नात एव प्रसिध्यति ।

स्ववेदनादेव तस्मादात्मसम्वेदनस्थिति ॥

अर्थादेव यदि सम्वेदनं गम्यते सम्वेदनमात्रं गम्येत नात्मसम्वेदनम् ॥ अथार्थसम्वेदनात् ।

ननु तदे[8]वार्थसम्वेदनमर्थापत्त्यावगम्यते । तत एव कथमर्थापत्तिरितरेतराश्रयदोषात् । यतो दृष्टोऽर्थोऽन्यथा नोपपद्यते इत्यदृष्टार्थपरिकल्पनमर्थापत्तिः । न चार्थसम्वेदन दृष्टमिति कुतोर्थापत्ति· । न चोभयस्य दर्शनमत एव । न ह्येकस्य दर्शनमुभयदर्शन तस्मात्स्वसम्वेदनमेव वेदनमन्यथाऽसिद्धे । (c. 138b) अत. परेण बुद्ध्यन्तरेण प्रत्यक्षात्मना वेद्यत इत्युपगतं ।[9] तत्र सकलपूर्व्वबुद्धिग्रहणेन न विषयान्तरसंचारः । यद्युपादानतया बुद्धेर्व्वेदनमसूक्ष्मादितया च रूपादेः । तदा योगिना परबुद्धिसूक्ष्मादिरूपादिवेदनं कथ । न दोष एव । यतः ॥

रूपादेः च मनश्चैवमविशुद्धधियं प्रति ।

ग्राह्यलक्षणचिन्तेयमचिन्त्या योगिनाङ्गतिः ॥ (५३०)

दूरसूक्ष्मादिपरचित्तवेदन हि कथ योगिनामिति न चिन्त्यत एवेदानीमेतत्। अर्व्वा[10]ग्दर्शनापेक्षया ग्राह्चलक्षणमिदमुक्तमस्माभि॰। परिशुद्धबुद्धिसन्ततयस्तु योगीश्वराः कथमिति किमनेन चिन्तितेनेत्यास्तामेतत्। यथा चेदन्तथा चिन्तितमेव लेशत॰। नन्वात्मीया बुद्धिर्यदि गृह्यते सर्वं गृहचेतेति कुत एतत्। न गृहचत इति तु विषयान्तरसञ्चारादेव गम्यते। तदपि न युक्तिमत्। यतः।

तत्र सूक्ष्मादिभावेन ग्राह्यमग्राह्यतां व्रजेत्

रूपादिबुद्धेः कि[11]जातं पश्चाद्यत् प्राड् न विद्यते ॥ (५३१)

न खलु तस्याः सूक्ष्मदूरादिभावो यः प्राङ नासीत्। असम्भवेपि विशेषस्य यदि ग्रहणविभागस्य तर्हि न सहेतुक इति न विभागवान्भवेत्।

सति स्वधीग्रहे तस्मात् सैवानन्तरहेतुता।

चेतसो ग्राह्यता सैव ततो नार्थान्तरे गतिः। (५३२)

(—)अनन्तरश्लोकः॥

ननु हेतुतैव ग्राह्चतेति (C 139a) न युक्तमेतत् अनेकशक्तित्त्वाद् भावाना। ततोन्या ग्राहचश[12]क्तिर्यापगता विषयान्तरसंचारकारणेऽन्या च जननमात्रशक्तिर्यत्प्रभावादुत्तरज्ञानोदयोर्थविषय। अनेकशक्तिता च भावानामनेककार्यजननादेवावधार्यते। अन्यथा नानेककार्यप्रसवस्तदपि यत् किञ्चिद्यतः।

नानैकशक्त्यभावेपि भावो नानैककार्यकृत्।

प्रकृत्यैवेति गदित

प्रकृतिरेषा भावाना कारणपराधीनजन्मनां पर्यनुयोगमर्ह[13]ति (।) कथमेतदिति। स्वकारणादुदयमासादयता प्रतिनियमेन कस्तस्य निषेद्धा। अन्यथा सापि शक्तिरीदृशी कुतः (।) इति न पर्यनुयोगान्मुक्तिः। स्वकारणाच्चेत् तत्किमिदानीमनया प्रकृत्यैव परिसमाप्तिरस्तु किमर्थान्तरकल्पनया। ननु स्वकारणाधीना शक्तिरियमिति लोकस्य प्रतीति। अस्तीयं प्रतीतिर्न्नव्यतिरिक्तशक्तिप्रतीति। स्वभावभूतधर्मभेदारोप[14]मात्रेण प्रतीते॰। कथमेतदिति चेत्। शक्तावप्यपरशक्तिप्रत्ययदर्शनात्। तथा हि।

शक्तियोगात्पदार्थश्चेत् कारण कार्यजन्मनि।

शक्तो [?क्ताव]पि कुत शक्तिरिति किन्न विकल्प्यते॥

तस्मात्कल्पनामात्रमेव शक्तिरन्यापोहेन व्यवस्थाप्यमानत्वात्।

ननु शक्तिमन्तरेण नानाभूता भावा एकत॰ कथम्भवन्ति। (C 139b) शक्तिभेदे सति भवन्तीति युक्त। अत्राह।

नानैकस्मा[15]न्न चेद्भवेत्। (५३३)

न किञ्चिदेकमेकस्मात्सामग्र्याः कार्यसम्भवः।
एक स्यादपि सामग्र्योरित्युक्तं तदनेककृत्। (५३४)

सामग्रीसम्भवे हि प्रायशः कार्याणा सम्भव किञ्चिदेकमेकस्मादुत्पत्तिमत्। तथानेकमनेकस्मादनेकञ्चैकस्मात्। यादृश्येव यस्य सामग्री तत एव तदेकमनेकम्वा भवेत्। एष प्रायश. प्रपञ्च॰। तथाहि। स्वकारणादेवम्भू[16]तमनेकमेकम्वा भवति। येनैकमनेकम्वा कार्यं जनयति। न शक्तिभेदत. क्वचिदुपयुज्यते। शक्तयोपि तत उपकारभागिन्यः तस्य ता इति व्यपदेशवत्य॰। न हृन्यथा शक्तय.। पदार्थान्तरभूता हि तदाभा. स्यु॰। पदार्थान्तरत्वे च तथा दर्शनप्रसङ्ग.। अथवा न किञ्चिदस्ति यदेकमेकस्मात्साग्र्या एवानेककार्योदय॰। कथन्तर्ह्यनेकमेकस्मादित्युच्यते। सामग्रीद्वयान्तर्भूतमेकमने[1]कं कार्यं जनयतीति तथा व्यपदेश। यदा प्रदीप एक एवानेकस्य दर्शनस्य जनक.। अनेकपुरुषानेकसमनन्तरसामग्रीसङ्गतत्वात्। यथा चैकस्यानेकशक्तियोगस्तथानेककार्ययोगोपि तस्मादनेककार्यत्वमनेकशक्तिताम्विनापि। एवन्तर्हि यथैकमनेककार्यं तथैकापि बुद्धि. स्वविषया च बुद्धि परार्थविषयाञ्च जनयिष्यति (।) तत्र (c 140a) कदाचिद्बुद्धिविष[2]या बुद्धि॰ कदाचिदर्थविषयेति विषयान्तरसंचारः। न। विशेषाभावादुभय सर्व्वदा जनयेत्। जन(य)त्येवेति चेत्। तन्न यत.। तदा।

अर्थं पूर्व्वञ्च विज्ञानं गृह्णीयाद्यदि धीः परा।
पूर्व्वापरार्थभासित्वाच्चिन्तादावेकचेतसि। (५३५)
अभिलापद्वय नेष्टं स्याद्(द्द)ष्टक्रममक्रम।
द्विर्द्विरेकञ्च भासेत भासनादात्मतद्विदोः। (५३६)

यदि वा द्वयं पूर्व्वबुद्धिग्राहि रूपाद्यर्थग्राहि चोत्पत्तिमत्तदा पूर्व्वबुद्ध्यर्थस्य परस्य[3] चार्थस्य प्रतिभासनादभिलापद्वय॰ यत्क्रमवदुपलभ्यते तदक्रमं प्रतिभासेत्। नहि बुद्धिरर्थग्रहणरूपतां विना प्रतिभासते। तद्रूपत्वात्तस्याः। अर्थग्रहणप्रतिभासे चार्थ एव प्रतिभासित इति। पूर्व्वापराभिलापद्वय प्रतिभासेत्। तथैकमेव द्विर्द्विरवभासेत्। अर्थस्यात्मनस्तद्बुद्धेश्च प्रतिभासनात्। पूर्व्वन्तावत्स्वयं प्रतिभाति पश्चात्तद्बुद्धिप्रतिभासने ततो द्विप्र[4]तिभासनं। अथार्थप्रतिभासानन्तर बुद्धिर्न्न गृह्यते। न बुद्धिः प्रत्यक्षेण स्वेन परेण वा गृह्यते। अर्थापत्त्यापि तर्हि यदि प्रतिभासते। तदापि भासनमात्मतद्विदोरिति स एव प्रसङ्गः। अथ कालान्तरेर्थापत्तिर्न्न हि तत्सन्ततानेकार्थग्रहणक्रमकाले कश्चिदर्थापत्तिमनुभवति।

नैतदस्ति।

सामर्थ्यात्प्रतिपत्तिश्चेत्सर्व्वदा स्यान्न वान्यदा ।
ततोर्थापत्तिसम्वित्तौ शतकृत्वो हि[5]भासन ।
अथ यदा स्वबुद्धीः संगणयति तदा कालान्तरेऽर्थापत्त्युदयः (C 140b)।
तदापि न तदा किञ्चित् दृष्टमस्ति यतो भवेत् ।
अर्थापत्तिरतीतत्त्वादर्थापत्तिकृतस्तदा ।

अतीतमर्थदर्शन कथं ततोऽर्थापत्तिसम्भवः। कालान्तरेपि स्मर्यमाणादर्थापत्तिरिति चेत्। स्मरणस्यैवार्थापत्त्यावगमो नानुभवस्य। तत्रापि स्यादभिलापद्वयम् द्विरवभासनञ्च। अथाननुभूतं न स्म[6]र्यते (।) ततोनुभवगतिरिति चेत्। तन्न।

अनुभूत मयेत्येव स्मरणस्य प्रवर्त्तने ।
बुद्धिरासीन्ममेत्येवमर्थापत्तेरसम्भव ।

यद् स्मरामि पूर्व्वसम्वेदनस्येति स्मरणमेव प्रथमम्बुद्धौ प्रवर्त्तते। तदा न पूर्व्वमर्थापत्तिर्न्नापि पश्चादिति कुतः स्मरणसम्भवः। यदाप्यर्थस्य स्मरणं तदापि स्मरणस्यानुभवस्य चानुमानमिति स्मरणानुभवार्थाकारयोर्युगपत्प्रति[7]भासप्रसङ्गः। तथा च स्मरणकालेपि स्पष्टार्थाकारवेदनप्रसङ्गः। अथास्पष्टाकारद्वयवेदनं तदपि न दृष्टमेवेत्यपरिहारः। अथ यस्य यदेष्यते तदा तस्यार्थापत्तिर्यतः स्मरामि ततोनुभूतं यतः यतः स्मरणं ततोनुभव इति वा। एवन्तर्हि यतोनुभवस्ततोनुभव इति स्यात् वाचो युक्तिः। तथा यतः स्मरणन्ततः स्मरणमिति महत्प्रमाणकौशलं। इच्छा[8]चानुभूते जायते। न चानुभवः कदाचिदननुभूत इति कथमिच्छयार्थापत्तिरुदियात्। तस्मादसदेव बुद्धचन्तरेण बुद्धिवेदनम् ॥

अथ (—)
विषयान्तरसञ्चारे यद्यन्त्यं नानुभूयते ।
परानुभूतिवत्सर्व्वाननुभूतिः प्रसज्यते ॥ (५३७)

विषयान्तरसञ्चरणकाले हि (C 141a) यद्यन्य विषयान्तरसंचारकालात्पूर्व्वविज्ञान विज्ञानप्रबन्धस्य। तदा सर्व्वाननुभूतिः परानुभूतव[9]द् भवेत्। अननुभूतानुभवस्यानुभूतत्त्वाभावात्परानुभूतवत्। ततोऽन्त्याननुभवात्तत्पूर्व्वकाननुभूतिर्यावदादिभूतस्या, पि यथा परानुभवेपि तदनुभूत एव स्याद्येनानुभूतत्वादन्येनाननुभवः। तथा स्वयमनुभूतेपि तत्तु पुनरर्थस्य स्वरूपं परापेक्षयापि तथेति कथमनुभवः।

ननु परानुभवे स्वयमनुभवे स्वयमननुभवात्परस्यानुभवो यथा व्यव[10]स्थाप्यते तथा परेणाननुभवे स्वस्यानुभव इति व्यवस्थाप्यतां ।

तदसत् । व्यवस्थाप्यता यदि प्रमाणमस्ति । यथा तु परेणानुभूत नात्मप्रत्यक्ष न च परस्येति व्यव पयितुं शक्यम् । तथात्मप्रत्यक्षाभिमतमपि नात्मनः परस्येति वा व्यवस्थापन इति ।

नन्वर्थ. स्वरूपेण प्रतीयते तत्कथमप्रत्यक्षता । नह्यन्यस्मिन्नप्रतीयमानेऽन्य[11]दप्रतीत नाम ।

सत्य प्रतीयते । स्वयमेव प्रतीयता । आत्मना प्रतीयते सोपि स्वयमेव प्रतीयता । तत. स्वसम्वेदनमेव । अथात्मा कर्तृतया प्रतीयते (।) न(।) शरीरव्यतिरेकेणात्माभावात् । शरीरस्य कर्तृता (C 141b) चेत् । न. शरीरस्यापि कर्मत्वात् । यस्मादसत्स्वसम्वेदन शरीरादीना । स्वसम्वेदनत्त्वे वाऽविवाद एव । बुद्धेरसम्वेदनमिति[12] चेत् । आत्मनः स्वसम्वेदने तेनार्थानुभवे तावता पर्याप्तमिति व्यर्थिका बुद्धि. । तत एवाह ।

आत्मानुभूत प्रत्यक्षं नानुभूतं परैर्यदि ।
आत्मानुभूतिःसा सिद्धा कुतो येनैवमुच्यते । (५३८)

आत्मनोनुभूतिरस्तीति कुतः । अन्येनानुभूतौ परात्मासौ न भवतीति कुत । स्वसम्वेदनेनानुभवे स्वसम्वेदनसिद्धिरेवेत्यविवाद एव । तस्माद[14]स्वसम्वेदने सर्व्वाननुभूतिप्रसङ्गः ।

ननु चक्षुरादिकेनाननुभूतेपि चक्षुरादिनानुभूतमिति भवति व्यवहारः । तथात्मसम्वेदनाननुभवेपि किन्नेष्यते ।

अत्रोच्यते ।

व्यक्तिहेत्वप्रसिद्धिःस्यान्न व्यक्तेर्व्यक्तिमिच्छतः [illegible]
व्यक्त्यसिद्धावपि व्यक्तं यदि व्यक्तमिद जगत् ।। (५३९)

व्यक्तिहेतवो हि चक्षुरादयस्तेषामसिद्धावपि नाव्यक्तता[14]र्थस्य व्यक्तिव्यक्तत्वात् । अस्मच्चक्षुर्व्यक्तमिति कथमस्मत्सम्वेदनजनकत्वादस्मच्चक्षुरिति व्यपदेशः । सम्वेदनस्य तु स्वसम्वेदनादेवास्मत्त्व । तस्यापि सम्वेदनस्यास्वसम्वेदनेनात्मसम्बन्धित्वेन किञ्चित्प्रतिपन्नमिति स्वरूपमात्रेण व्यक्तत्वे सकलं व्यक्त जगज्जायेतेत्यतिसङ्प्रसगः ।

ननु यत्र व्यक्तिरुत्पन्ना तद्व्यक्तमिति कथ[16]मतिप्रसङ्ग. (C 142a) ।

व्यक्तेरुदयमात्रेण व्यक्त यदि तदाश्रित (।)
अस्य व्यक्तेरितीदन्तु न सम्बन्धविनाकृत ।।
तस्मात्स्वरूपमात्रेण सर्व्वस्य व्यक्तता भवेत् ।
अथ तद्रूप एवार्थं स्वसम्वेदनमुच्यता ।।

प्रमाणवार्तिकालङ्कारे प्रत्यक्षपरिच्छेदो द्वितीय * ॥

---

*प्रमाणवार्तिककारिकाया अयमेव तृतीय. परिच्छेद ।